मासमात्रं त्रिसन्ध्यायां जिह्वयाऽऽरोप्य मारुतम्।
अमृतं च पिबन्नाभौ मन्दं मन्दं निरोधयेत्॥ २९

वातजाः पित्तजा दोषा नश्यन्त्येव न संशयः।
नासाभ्यां वायुमाकृष्य नेत्रद्वन्द्वे निरोधयेत्॥ ३०

नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात्।
तथा वायुं समारोप्य धारयेच्छिरसि स्थितम्॥ ३१

शिरोरोगा विनश्यन्ति सत्यमुक्तं हि सांकृते।

षण्मुखीमुद्राभ्यासादिना वायुजयः

स्वस्तिकासनमास्थाय समाहितमनास्तथा॥ ३२

अपानमूर्ध्वमुत्थाप्य प्रणवेन शनैः शनैः।
हस्ताभ्यां धारयेत्सम्यक् कर्णादिकरणानि च॥ ३३

अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्जनीभ्यां तु चक्षुषी।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै॥ ३४

आनन्दाविर्भवो यावत् तावन्मूर्धनि धारयेत्।
प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने॥ ३५

ब्रह्मरन्ध्रं गते वायौ नादश्चोत्पद्यतेऽनघ।
शङ्खध्वनिनिभश्चादौ मध्ये मेघध्वनिर्यथा॥ ३६

शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा।
पश्चात् प्रीतो महाप्राज्ञ साक्षादात्मोन्मुखो भवेत्॥ ३७

पुनस्तज्ज्ञाननिष्पत्तिर्योगात् संसारनिह्नुतिः।
दक्षिणोत्तरगुल्फेन सीविनीं पीडयेत् स्थिराम्॥ ३८

सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान् नरः।
जान्वोरधः स्थितां सन्धिं स्मृत्वा देवं त्रियम्बकम्॥ ३९

विनायकं च संस्मृत्य तथा वागीश्वरीं पुनः ।
लिङ्गनालात् समाकृष्य वायुमप्यग्रतो मुने ।। ४०

प्रणवेन नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् ।
मूलाधारस्य विप्रेन्द्र मध्ये तं तु निरोधयेत् ।। ४१

निरुध्य वायुना दीप्तो वह्निरूहति कुण्डलीम् ।
पुनः सुषुम्नया वायुर्वह्निना सह गच्छति ।। ४२

एवमभ्यसतस्तस्य जितो वायुर्भवेद्भृशम् ।

वायुजयचिह्नानि

प्रस्वेदः प्रथमः पश्चात् कम्पनं मुनिपुङ्गव ।। ४३

उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले ।

वायुजयेन ज्ञानोत्पत्तिः

एवमभ्यसतस्तस्य मूलरोगो विनश्यति ।। ४४

भगन्दरं च नष्टं स्यात् सर्वरोगाश्च सांकृते ।
पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ।। ४५

नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् ।
पुनर्ब्रह्मादिभोगेभ्यो वैराग्यं जायते हृदि ।। ४६

विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् ।
तेन पाशापहानिः स्यात् ज्ञात्वा देवं सदाशिवम् ।। ४७

ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ।
स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ।। ४८

ज्ञानस्वरूपमेवाहुर्जगदेतद्विचक्षणाः ।
अर्थस्वरूपमज्ञानात् पश्यन्त्यन्ये कुदृष्टयः ।। ४९

आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः ।
क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां परिक्षयः ।। ५०

रागाद्यसंभवे प्राज्ञ पुण्यपापविमर्शनम् ।
तयोर्नाशे शरीरेण न पुनः संप्रयुज्यते ।। ५१

इति षष्ठः खण्डः

* * *

## प्रत्याहारलक्षणम्, तद्भेदाश्च

अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने ।
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ।। १

बलादाहरणं तेषां प्रत्याहारः स उच्यते ।
यत्पश्यति तु तत्सर्वं ब्रह्म पश्यन्समाहितः ।। २

प्रत्याहारो भवेदेष ब्रह्मविद्भिः पुरोदितः ।
यद्यच्छुद्धमशुद्धं वा करोत्यामरणान्तिकम् ।। ३

तत्सर्वं ब्रह्मणे कुर्यात् प्रत्याहारः स उच्यते ।
अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः ।। ४

काम्यानि च तथा कुर्यात् प्रत्याहारः स उच्यते ।
अथवा वायुमाकृष्य स्थानात् स्थानं निरोधयेत् ।। ५

दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम् ।
उरोदेशात् समाकृष्य नाभिदेशे निरोधयेत् ।। ६

नाभिदेशात् समाकृष्य कुण्डल्यां तु निरोधयेत् ।
कुण्डलीदेशतो विद्वान् मूलाधारे निरोधयेत् ।। ७

अथापानात्कटिद्वन्द्वे तथोरौ च सुमध्यमे ।
तस्माज्जानुद्वये जङ्घे पादाङ्गुष्ठे निरोधयेत् ।। ८

प्रत्याहारोऽयमुक्तस्तु प्रत्याहारपरैः पुरा।

### प्रत्याहारफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ।। ९

सर्वपापानि नश्यन्ति भवरोगश्च सुव्रत।

### वायुधारणात्मकप्रत्याहारः

नासाभ्यां वायुमाकृष्य निश्चलः स्वस्तिकासनः ।। १०

पूरयेदनिलं विद्वानापादतलमस्तकम्।
पश्चात् पादद्वये तद्वत् मूलाधारे तथैव च।। ११

नाभिकन्दे च हृन्मध्ये कण्ठमूले च तालुके।
भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत्।। १२

### वेदान्तसम्मतप्रत्याहारः

देहे त्वात्ममतिं विद्वान् समाकृष्य समाहितः।
आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत्।। १३

प्रत्याहारः समाख्यातः साक्षाद्वेदान्तवेदिभिः।
एवमभ्यसतस्तस्य न किञ्चिदपि दुर्लभम्।। १४

इति सप्तमः खण्डः

* * *

### पञ्चभूतेषु धारणा

अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत्।। १

प्राणे बाह्यानिलं तद्वत् ज्वलने चाग्निमौदरे ।
तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २

हयरावलकाराख्यं मन्त्रमुच्चारयेत् क्रमात् ।
धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥ ३

जान्वन्तं पृथिवी ह्यंशो ह्यपां पाय्वन्तमुच्यते ।
हृदयांशस्तथाऽग्र्यंशो भ्रूमध्यान्तोऽनिलांशकः ॥ ४

आकाशांशस्तथा प्राज्ञ मूर्धांशः परिकीर्तितः ।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५

अग्न्यंशे च महेशानमीश्वरं चानिलांशके ।
आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥ ६

आत्मनि धारणा

अथ वा तव वक्ष्यामि धारणां मुनिपुङ्गव ।
पुरुषे सर्वशास्तारं बोधानन्दमयं शिवम् ॥ ७

धारयेद्बुद्धिमान् नित्यं सर्वपापविशुद्धये ।
ब्रह्मादिकार्यरूपाणि स्वे स्वे संहृत्य कारणे ॥ ८

सर्वकारणमव्यक्तमनिरूप्यमचेतनम् ।
साक्षादात्मनि संपूर्णे धारयेत् प्रणवे मनः ।
इन्द्रियाणि समाहृत्य मनसाऽऽत्मनि योजयेत् ॥ ९

इत्यष्टमः खण्डः

* * *

सविशेषनिर्विशेषब्रह्मध्यानम्

अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम् ।
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ १

ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं महेश्वरम्।
सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम्।। २

अथ वा सत्यमीशानं ज्ञानमानन्दमद्वयम्।
अत्यर्थममलं नित्यमादिमध्यान्तवर्जितम्।। ३

तथाऽस्थूलमनाकाशमसंस्पृश्यमचाक्षुषम्।
न रसं न च गन्धाख्यमप्रमेयमनूपमम्।। ४

आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत।
अहमस्मीत्यभिध्यायेद्देहातीतं विमुक्तये।। ५

ध्यानफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः।
क्रमाद्वेदान्तविज्ञानं विज्ञायेत न संशयः।। ६

इति नमवः खण्डः

* * *

समाधिस्वरूपम्

अथातः संप्रवक्ष्यामि समाधिं भवनाशनम्।
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति।। १

नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः।
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः।। २

तस्मादद्वैतमेवास्ति न प्रपञ्चो न संसृतिः।
यथाऽऽकाशो घटाकाशो मठाकाश इतीरितः।। ३

तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना।
नाहं देहो न च प्राणो नेन्द्रियाणि मनो न हि।। ४

सदा साक्षिस्वरूपत्वाच्छिव एवास्मि केवलः ।
इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ।। ५

ब्रह्ममात्रावशेषः

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन ।
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ।। ६

समुद्रे लीयते तद्वत् जगन्मय्यनुलीयते ।
तस्मान्मनः पृथङ् नास्ति जगन्माया च नास्ति हि ।। ७

यस्यैवं परमात्माऽयं प्रत्यग्भूतः प्रकाशितः ।
स तु याति च पुंभावं स्वयं साक्षात् परामृतम् ।। ८

यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ।। ९

यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ।। १०

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ।। ११

यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतिः ।। १२

उपसंहारः

एवमुक्त्वा स भगवान् दत्तात्रेयो महामुनिः ।
सांकृतिः स्वस्वरूपेण सुखमास्तेऽतिनिर्भयः ।। १३ इति ।

इति दशमः खण्डः

***

# ४. अवधूतगीता-१

## (श्रीमद्भागवते एकादशस्कन्धे-अ.७.८.९)
## श्रीकृष्णोद्धवसंवादात्मिका)

### सप्तमोऽध्यायः

उद्धव उवाच-

योगेश योगविन्यास योगात्मन् योगसम्भव।
निःश्रेयसाय मे प्रोक्तस्त्यागः संन्यासलक्षणः ॥ १

त्यागोऽयं दुष्करो भूमन् कामानां विषयात्मभिः।
सुतरां त्वयि सर्वात्मन्नभक्तैरिति मे मतिः ॥ २

सोऽहं ममाहमिति मूढमतिर्विगाढः
त्वन्मायया विरचितात्मनि सानुबन्धे।
तत्त्वञ्जसा निगदितं भवता यथाहं
संसाधयामि भगवन्ननुशाधि भृत्यम् ॥ ३

सत्यस्य ते स्वदृश आत्मन आत्मनोऽन्यं
वक्तारमीश विबुधेष्वपि नानुचक्षे।
सर्वे विमोहितधियस्तव माययेमे
ब्रह्मादयस्तनुभृतो बहिरर्थभावाः ॥ ४

तस्माद् भवन्तमनवद्यमनन्तपारं
सर्वज्ञमीश्वरमकुण्ठविकुण्ठधिष्ण्यम्।
निर्विण्णधीरहमु ह वृजिनाभितप्तो
नारायणं नरसखं शरणं प्रपद्ये ॥ ५

श्रीभगवानुवाच-

प्रायेण मनुजा लोके लोकतत्त्वविचक्षणाः।
समुद्धरन्ति ह्यात्मानमात्मनैवाशुभाशयात् ॥ ६

आत्मनो गुरुरात्मैव पुरुषस्य विशेषतः ।
यत् प्रत्यक्षानुमानाभ्यां श्रेयोऽसावनुविन्दते ।। ७

पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ।। ८

एकद्वित्रिचतुष्पादो बहुपादस्तथापदः ।
बह्व्यः सन्ति पुरः सृष्टास्तासां मे पौरुषी प्रिया ।। ९ ।।

अत्र मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् ।
गृह्यमाणैर्गुणैर्लिङ्गैरग्राह्यमनुमानतः ।। १० ।।

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
अवधूतस्य संवादं यदोरमिततेजसः ।। ११

अवधूतं द्विजं कञ्चिच्चरन्तमकुतोभयम् ।
कविं निरीक्ष्य तरुणं यदुः पप्रच्छ धर्मवित् ।। १२

यदुरुवाच-

कुतो बुद्धिरियं ब्रह्मन्नकर्तुः सुविशारदा ।
यामासाद्य भवाँल्लोकं विद्वांश्चरति बालवत् ।। १३

प्रायो धर्मार्थकामेषु विवित्सायां च मानवाः ।
हेतुनैव समीहन्ते आयुषो यशसः श्रियः ।। १४

त्वं तु कल्पः कविर्दक्षः सुभगोऽमृतभाषणः ।
न कर्ता नेहसे किञ्चिज्जडोन्मत्तपिशाचवत् ।। १५

जनेषु दह्यमानेषु कामलोभदवाग्निना ।
न तप्यसेऽग्निना मुक्तो गङ्गाम्भःस्थ इव द्विपः ।। १६

त्वं हि नः पृच्छतां ब्रह्मन्नात्मन्यानन्दकारणम् ।
ब्रूहि स्पर्शविहीनस्य भवतः केवलात्मनः ।। १७

श्रीभगवानुवाच-

यदुनैवं महाभागो ब्रह्मण्येन सुमेधसा।
पृष्टः सभाजितः प्राह प्रश्रयावनतं द्विजः ।। १८

ब्राह्मण उवाच-

सन्ति मे गुरवो राजन् बहवो बुद्ध्युपाश्रिताः ।
यतो बुद्धिमुपादाय मुक्तोऽटामीह ताञ्छृणु ।। १९

पृथिवी वायुराकाशमापोऽग्निश्चन्द्रमा रविः ।
कपोतोऽजगरः सिन्धुः पतङ्गो मधुकृद् गजः ।। २०

मधुहा हरिणो मीनः पिङ्गला कुररोऽर्भकः ।
कुमारी शरकृत् सर्प ऊर्णनाभिः सुपेशकृत् ।। २१

एते मे गुरवो राजंश्चतुर्विंशतिराश्रिताः ।
शिक्षां वृत्तिभिरेतेषामन्वशिक्षमिहात्मनः ।। २२

यतो यदनुशिक्षामि यथा वा नाहुषात्मज ।
तत्तथा पुरुषव्याघ्र निबोध कथयामि ते ।। २३

भूतैराक्रम्यमाणोऽपि धीरो दैववशानुगैः।
तद् विद्वान्न चलेन्मार्गादन्वशिक्षं क्षितेर्व्रतम् ।। २४

शश्वत्परार्थसर्वेहः परार्थैकान्तसम्भवः ।
साधुः शिक्षेत भूभृत्तो नगशिष्यः परात्मताम् ।। २५

प्राणवृत्त्यैव सन्तुष्येन्मुनिर्नैवेन्द्रियप्रियैः ।
ज्ञानं यथा न नश्येत नावकीर्येत वाङ्मनः ।। २६

विषयेष्वाविशन् योगी नानाधर्मेषु सर्वतः ।
गुणदोषव्यपेतात्मा न विषज्जेत वायुवत् ।। २७

पार्थिवेष्विह देहेषु प्रविष्टस्तद्गुणाश्रयः ।
गुणैर्न युज्यते योगी गन्धैर्वायुरिवात्मदृक् ।। २८

अन्तर्हितश्च स्थिरजङ्गमेषु
ब्रह्मात्मभावेन समन्वयेन ।
व्याप्त्या व्यवच्छेदमसङ्गमात्मनो
मुनिर्नभस्त्वं विततस्य भावयेत् ।। २९

तेजोऽबन्नमयैर्भावैर्मेघाद्यैर्वायुनेरितैः
न स्पृश्यते नभस्तद्वत् कालसृष्टैर्गुणैः पुमान् ।। ३०

स्वच्छः प्रकृतितः स्निग्धो माधुर्यस्तीर्थभूर्नृणाम् ।
मुनिः पुनात्यपां मित्रमीक्षोपस्पर्शकीर्तनैः ।। ३१

तेजस्वी तपसा दीप्तो दुर्धर्षोदरभाजनः ।
सर्वभक्षोऽपि युक्तात्मा नादत्ते मलमग्निवत् ।। ३२

क्वचिच्छन्नः क्वचित् स्पष्ट उपास्यः श्रेय इच्छताम् ।
भुङ्क्ते सर्वत्र दातॄणां दहन् प्रागुत्तराशुभम् ।। ३३

स्वमायया सृष्टमिदं सदसल्लक्षणं विभुः ।
प्रविष्ट ईयते तत्तत्स्वरूपोऽग्निरिवैधसि ।। ३४

विसर्गाद्याः श्मशानान्ता भावा देहस्य नात्मनः ।
कलानामिव चन्द्रस्य कालेनाव्यक्तवर्त्मना ।। ३५

कालेन ह्योघवेगेन भूतानां प्रभवाप्ययौ ।
नित्यावपि न दृश्येते आत्मनोऽग्नेर्यथार्चिषाम् ।। ३६

गुणैर्गुणानुपादत्ते यथाकालं विमुञ्चति ।
न तेषु युज्यते योगी गोभिर्गा इव गोपतिः ।। ३७

बुध्यते स्वेनभेदेन व्यक्तिस्थ इव तद्गतः ।
लक्ष्यते स्थूलमतिभिरात्मा चावस्थितोऽर्कवत् ।। ३८

नातिस्नेहः प्रसङ्गो वा कर्तव्यः क्वापि केनचित् ।
कुर्वन् विन्देत सन्तापं कपोत इव दीनधीः ।। ३९

कपोतः कश्चनारण्ये कृतनीडो वनस्पतौ ।
कपोत्या भार्यया सार्धमुवास कतिचित् समाः ।। ४०

कपोतौ स्नेहगुणितहृदयौ गृहधर्मिणौ ।
दृष्टिं दृष्ट्याङ्गभङ्गेन बुद्धिं बुद्ध्या बबन्धतुः ।। ४१

शय्यासनाटनस्थानवार्ताक्रीडाशनादिकम् ।
मिथुनीभूय विस्रब्धौ चेरतुर्वनराजिषु ।। ४२

यं यं वाञ्छति सा राजंस्तर्पयन्त्यनुकम्पिता ।
तं तं समनयत् कामं कृच्छ्रेणाप्यजितेन्द्रियः ।। ४३

कपोती प्रथमं गर्भं गृह्णती काल आगते ।
अण्डानि सुषुवे नीडे स्वपत्युः सन्निधौ सती ।। ४४

तेषु काले व्यजायन्त रचितावयवा हरेः ।
शक्तिभिर्दुर्विभाव्याभिः कोमलाङ्गतनूरुहाः ।। ४५

प्रजाः पुपुषतुः प्रीतौ दम्पती पुत्रवत्सलौ ।
शृण्वन्तौ कूजितं तासां निर्वृतौ कलभाषितैः ।।४६

तासां पतत्त्रैः सुस्पर्शैः कूजितैर्मुग्धचेष्टितैः ।
प्रत्युद्गमैरदीनानां पितरौ मुदमापतुः ।। ४७

स्नेहानुबद्धहृदयावन्योन्यं विष्णुमायया ।
विमोहितौ दीनधियौ शिशून् पुपुषतुः प्रजाः ।। ४८

एकदा जग्मतुस्तासामन्नार्थं तौ कुटुम्बिनौ।
परितः कानने तस्मिन्नर्थिनौ चेरतुश्चिरम्॥ ४९

दृष्ट्वा ताँल्लुब्धकः कश्चिद् यदृच्छातो वनेचरः।
जगृहे जालमातत्य चरतः स्वालयान्तिके॥ ५०

कपोतश्च कपोती च प्रजापोषे सदोत्सुकौ।
गतौ पोषणमादाय स्वनीडमुपजग्मतुः॥ ५१

कपोती स्वात्मजान् वीक्ष्य बालकाञ्जालसंवृतान्।
तानभ्यधावत् क्रोशन्ती क्रोशतो भृशदुःखिता॥ ५२

साऽसकृत्स्नेहगुणिता दीनचित्ताऽजमायया।
स्वयं चाबध्यत शिचा बद्धान् पश्यन्त्यपस्मृतिः॥ ५३

कपोतश्चात्मजान् बद्धानात्मनोऽप्यधिकान् प्रियान्।
भार्यां चात्मसमां दीनो विललापातिदुःखितः॥ ५४

अहो मे पश्यतापायमल्पपुण्यस्य दुर्मतेः।
अतृप्तस्याकृतार्थस्य गृहस्त्रैवर्गिको हतः॥ ५५

अनुरूपाऽनुकूला च यस्य मे पतिदेवता।
शून्ये गृहे मां सन्त्यज्य पुत्रैः स्वर्याति साधुभिः॥ ५६

सोऽहं शून्ये गृहे दीनो मृतदारो मृतप्रजः।
जिजीविषे किमर्थं वा विधुरो दुःखजीवितः॥ ५७

तांस्तथैवावृताञ्छिग्भिर्मृत्युग्रस्तान् विचेष्टतः।
स्वयं च कृपणः शिक्षु पश्यन्नप्यबुधोऽपतत्॥ ५८

तं लब्ध्वा लुब्धकः क्रूरः कपोतं गृहमेधिनम्।
कपोतकान् कपोतीं च सिद्धार्थः प्रययौ गृहम्॥ ५९

एवं कुटुम्ब्यशान्तात्मा द्वन्द्वारामः पतत्रिवत्।
पुष्णन् कुटुम्बं कृपणः सानुबन्धोऽवसीदति ।। ६०

यः प्राप्य मानुषं लोकं मुक्तिद्वारमपावृतम्।
गृहेषु खगवत् सक्तस्तमारूढच्युतं विदुः ।। ६१

अष्टमोऽध्यायः

ब्राह्मण उवाच-

सुखमैन्द्रियकं राजन् स्वर्गे नरक एव च।
देहिनां यद् यथा दुःखं तस्मान्नेच्छेत तद् बुधः ।। १

ग्रासं सुमृष्टं विरसं महान्तं स्तोकमेव वा।
यदृच्छयैवापतितं ग्रसेदाजगरोऽक्रियः ।। २

शयीताहानि भूरीणि निराहारोऽनुपक्रमः ।
यदि नोपनमेद् ग्रासो महाहिरिव दिष्टभुक् ।। ३ ।।

ओजः सहोबलयुतं बिभ्रद् देहमकर्मकम्।
शयानो वीतनिद्रश्च नेहेतेन्द्रियवानपि ।। ४ ।।

मुनिः प्रसन्नगम्भीरो दुर्विगाह्यो दुरत्ययः ।
अनन्तपारो ह्यक्षोभ्यः स्तिमितोद इवार्णवः ।। ५ ।।

समृद्धकामो हीनो वा नारायणपरो मुनिः ।
नोत्सर्पेत न शुष्येत सरिद्भिरिव सागरः ।। ६ ।।

दृष्ट्वा स्त्रियं देवमायां तद्भावैरजितेन्द्रियः ।
प्रलोभितः पतत्यन्धे तमस्यग्नौ पतङ्गवत् ।। ७ ।।

योषिद्धिरण्याभरणाम्बरादि-
द्रव्येषु मायारचितेषु मूढः।

प्रलोभितात्मा ह्युपभोगबुद्ध्या
पतङ्गवन्नश्यति नष्टदृष्टिः ॥ ८ ॥

स्तोकं स्तोकं ग्रसेद् ग्रासं देहो वर्तेत यावता।
गृहानहिंसन्नातिष्ठेद् वृत्तिं माधुकरीं मुनिः ॥ ९ ॥

अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः।
सर्वतः सारमादद्यात् पुष्पेभ्य इव षट्पदः ॥ १० ॥

सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षितम्।
पाणिपात्रोदरामत्रो मक्षिकेव न सङ्ग्रही ॥ ११ ॥

सायन्तनं श्वस्तनं वा न संगृह्णीत भिक्षुकः।
मक्षिका इव संगृह्णन् सह तेन विनश्यति ॥ १२ ॥

पदापि युवतीं भिक्षुर्न स्पृशेद् दारवीमपि।
स्पृशन् करीव बध्येत करिण्या अङ्गसङ्गतः ॥ १३ ॥

नाधिगच्छेत् स्त्रियं प्राज्ञः कर्हिचिन्मृत्युमात्मनः।
बलाधिकैः स हन्येत गजैरन्यैर्गजो यथा ॥ १४ ॥

न देयं नोपभोग्यं च लुब्धैर्यद् दुःखसञ्चितम्।
भुङ्क्ते तदपि तच्चान्यो मधुहेवार्थविन्मधु ॥ १५ ॥

सुदुःखोपार्जितैर्वित्तैराशासानां गृहाशिषः।
मधुहेवाग्रतो भुङ्क्ते यतिर्वै गृहमेधिनाम् ॥ १६ ॥

ग्राम्यगीतं न शृणुयाद् यतिर्वनचरः क्वचित्।
शिक्षेत हरिणाद् बद्धान्मृगयोर्गीतमोहितात् ॥ १७॥

नृत्यवादित्रगीतानि जुषन् ग्राम्याणि योषिताम्।
आसां क्रीडनको वश्य ऋष्यशृङ्गो मृगीसुतः ॥१८ ॥

जिह्वयाऽतिप्रमाथिन्या जनो रसविमोहितः ।
मृत्युमृच्छत्यसद्बुद्धिर्मीनस्तु बडिशैर्यथा ॥ १९ ॥

इन्द्रियाणि जयन्त्याशु निराहारा मनीषिणः ।
वर्जयित्वा तु रसनं तन्निरन्नस्य वर्धते । २० ॥

तावज्जितेन्द्रियो न स्याद् विजितान्येन्द्रियः पुमान् ।
न जयेद् रसनं यावज्जितं सर्वं जिते रसे ॥ २१ ॥

पिङ्गला नाम वेश्याऽऽसीद् विदेहनगरे पुरा ।
तस्या मे शिक्षितं किञ्चिन्निबोध नृपनन्दन ॥ २२ ॥

सा स्वैरिण्येकदा कान्तं सङ्केत उपनेष्यती ।
अभूत् काले बहिर्द्वारि बिभ्रती रूपमुत्तमम् ॥ २३ ॥

मार्ग आगच्छतो वीक्ष्य पुरुषान् पुरुषर्षभ ।
ताञ्छुल्कदान् वित्तवतः कान्तान् मेनेऽर्थकामुका ॥ २४ ॥

आगतेष्वपयातेषु सा सङ्केतोपजीविनी ।
अप्यन्यो वित्तवान् कोऽपि मामुपैष्यति भूरिदः ॥ २५ ॥

एवं दुराशया ध्वस्तनिद्रा द्वार्यवलम्बती ।
निर्गच्छन्ती प्रविशती निशीथं समपद्यत ॥ २६ ॥

तस्या वित्ताशया शुष्यद्वक्त्राया दीनचेतसः ।
निर्वेदः परमो जज्ञे चिन्ताहेतुः सुखावहः ॥ २७ ॥

तस्या निर्विण्णचित्ताया गीतं शृणु यथा मम ।
निर्वेद आशापाशानां पुरुषस्य यथा ह्यसिः ॥ २८ ॥

न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति ।
यथा विज्ञानरहितो मनुजो ममतां नृप ॥ २९ ॥

पिङ्गलोवाच-

अहो मे मोहविततिं पश्यताविजितात्मनः ।
या कान्तादसतः कामं कामये येन बालिशा ।। ३० ।।

सन्तं समीपे रमणं रतिप्रदं
वित्तप्रदं नित्यमिमं विहाय ।
अकामदं दुःखभयाधिशोक-
मोहप्रदं तुच्छमहं भजेऽज्ञा ।। ३१ ।।

अहो मयाऽऽत्मा परितापितो वृथा
साङ्केत्यवृत्त्याऽतिविगर्ह्यवार्तया ।
स्त्रैणान्नराद् याऽर्थतृषोऽनुशोच्यात्
क्रीतेन वित्तं रतिमात्मनेच्छती ।। ३२ ।।

यदस्थिभिर्निर्मितवंशवंश्य-
स्थूणं त्वचा रोमनखैः पिनद्धम् ।
क्षरन्नवद्वारमगारमेतद्
विण्मूत्रपूर्णं मदुपैति कान्या ।। ३३ ।।

विदेहानां पुरे ह्यस्मिन्नहमेकैव मूढधीः ।
यान्यमिच्छन्त्यसत्यस्मादात्मदात् काममच्युतात् ।। ३४ ।।

सुहृत् प्रेष्ठतमो नाथ आत्मा चायं शरीरिणाम् ।
तं विक्रीयात्मनैवाहं रमेऽनेन यथा रमा ।। ३५ ।।

कियत् प्रियं ते व्यभजन् कामा ये कामदा नराः ।
आद्यन्तवन्तो भार्याया देवा वा कालविद्रुताः ।।३६ ।।

नूनं मे भगवान् प्रीतो विष्णुः केनापि कर्मणा ।
निर्वेदोऽयं दुराशाया यन्मे जातः सुखावहः ।। ३७ ।।

मैवं स्युर्मन्दभाग्यायाः क्लेशा निर्वेदहेतवः ।
येनानुबन्धं निर्हृत्य पुरुषः शममृच्छति ।। ३८ ।।

तेनोपकृतमादाय शिरसा ग्राम्यसङ्गताः ।
त्यक्त्वा दुराशाः शरणं व्रजामि तमधीश्वरम् ।। ३९ ।।

सन्तुष्टा श्रद्दधत्येतद्यथालाभेन जीवती ।
विहराम्यमुनैवाहमात्मना रमणेन वै ।। ४० ।।

संसारकूपे पतितं विषयैर्मुषितेक्षणम् ।
ग्रस्तं कालाहिनाऽऽत्मानं कोऽन्यस्त्रातुमधीश्वरः ।। ४१ ।।

आत्मैव ह्यात्मनो गोप्ता निर्विद्येत यदाऽखिलात् ।
अप्रमत्त इदं पश्येद् ग्रस्तं कालाहिना जगत् ।। ४२ ।।

ब्राह्मण उवाच-

एवं व्यवसितमतिर्दुराशां कान्ततर्षजाम् ।
छित्त्वोपशममास्थाय शय्यामुपविवेश सा ।। ४३ ।।

आशा हि परमं दुःखं नैराश्यं परमं सुखम् ।
यथा सञ्छिद्य कान्ताशां सुखं सुष्वाप पिङ्गला ।। ४४ ।।

## नवमोऽध्यायः

ब्राह्मण उवाच-

परिग्रहो हि दुःखाय यद् यत्प्रियतमं नृणाम् ।
अनन्तं सुखमाप्नोति तद् विद्वान् यस्त्वकिञ्चनः ।। १ ।।

सामिषं कुररं जघ्नुर्बलिनो ये निरामिषाः ।
तदामिषं परित्यज्य स सुखं समविन्दत ।। २ ।।

न मे मानावमानौ स्तो न चिन्ता गेहपुत्रिणाम्।
आत्मक्रीड आत्मरतिर्विचरामीह बालवत्।। ३ ।।

द्वावेव चिन्तया मुक्तौ परमानन्द आप्लुतौ।
यो विमुग्धो जडो बालो यो गुणेभ्यः परं गतः ।। ४ ।।

कचित् कुमारी त्वात्मानं वृणानान् गृहमागतान्।
स्वयं तानर्हयामास क्वापि यातेषु बन्धुषु ।। ५ ।।

तेषामभ्यवहारार्थं शालीन् रहसि पार्थिव।
अवघ्नन्त्याः प्रकोष्ठस्थाश्चक्रुः शङ्खाः स्वनं महत्।। ६ ।।

सा तज्जुगुप्सितं मत्वा महती व्रीडिता ततः ।
बभञ्जैकैकशः शङ्खान् द्वौ द्वौ पाण्योरशेषयत्।। ७ ।।

उभयोरप्यभूद् घोषो ह्यवघ्नन्त्याः स्म शङ्खयो।
तत्राप्येकं निरभिदद्देकस्मान्नाभवद् ध्वनिः ।। ८ ।।

अन्वशिक्षमिमं तस्या उपदेशमरिन्दम।
लोकाननुचरन्नेतान् लोकतत्त्वविवित्सया।। ९ ।।
वासे बहूनां कलहो भवेद् वार्ता द्वयोरपि।
एक एव चरेत्तस्मात् कुमार्या इव कङ्कणः ।। १० ।।

मन एकत्र संयुज्याज्जितश्वासो जितासनः ।
वैराग्याभ्यासयोगेन ध्रियमाणमतन्द्रितः ।। ११ ।।

यस्मिन् मनो लब्धपदं यदेतत् शनैः शनैर्मुञ्चति कर्मरेणून्।
सत्त्वेन वृद्धेन रजस्तमश्च विधूय निर्वाणमुपैत्यनिन्धनम्।। १२ ।।

तदैवमात्मन्यवरुद्धचित्तो
न वेद किञ्चिद् बहिरन्तरं वा।

यथेषुकारो नृपतिं व्रजन्त-
मिषौ गतात्मा न ददर्श पार्श्वे ॥ १३ ॥

एकचार्यनिकेतः स्यादप्रमत्तो गुहाशयः ।
अलक्ष्यमाण आचारैर्मुनिरेकोऽल्पभाषणः ॥ १४ ॥

गृहारम्भोऽति दुःखाय विफलश्चाध्रुवात्मनः ।
सर्पः परकृतं वेश्म प्रविश्य सुखमेधते ॥ १५ ॥
एको नारायणो देवः पूर्वसृष्टं स्वमायया ।
संहृत्य कालकलया कल्पान्त इदमीश्वरः ॥ १६ ॥

एक एवाद्वितीयोऽभूदात्माधारोऽखिलाश्रयः ।
कालेनात्मानुभावेन साम्यं नीतासु शक्तिषु ।
सत्त्वादिष्वादिपुरुषः प्रधानपुरुषेश्वरः ॥ १७ ॥

परावराणां परम आस्ते कैवल्यसंज्ञितः ।
केवलानुभवानन्दसन्दोहो निरुपाधिकः ॥ १८ ॥

केवलात्मानुभावेन स्वमायां त्रिगुणात्मिकाम् ।
संक्षोभयन् सृजत्यादौ तया सूत्रमरिन्दम ॥ १९ ॥

तामाहुस्त्रिगुणव्यक्तिं सृजन्तीं विश्वतोमुखम् ।
यस्मिन् प्रोतमिदं विश्वं येन संसरते पुमान् ॥ २० ॥

यथोर्णनाभिर्हृदयादूर्णां सन्तत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वरः ॥ २१ ॥

यत्र यत्र मनो देही धारयेत्सकलं धिया ।
स्नेहाद् द्वेषाद् भयाद् वापि याति तत्तत्सरूपताम् ॥ २२ ॥

कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः ।
याति तत्सात्मतां राजन् पूर्वरूपमसन्त्यजन् ॥ २३ ॥

एवं गुरुभ्य एतेभ्य एषा मे शिक्षिता मतिः ।
स्वात्मोपशिक्षितां बुद्धिं शृणु मे वदतः प्रभो ॥ २४ ॥

देहो गुरुर्मम विरक्तिविवेकहेतुः
बिभ्रत् स्म सत्त्वनिधनं सततार्त्युदर्कम् ।
तत्त्वान्यनेन विमृशामि यथा तथापि
पारक्यमित्यवसितो विचराम्यसङ्गः ॥ २५ ॥

जायात्मजार्थपशुभृत्यगृहाप्तवर्गान्
पुष्णाति यत्प्रियचिकीर्षया वितन्वन् ।
स्वान्ते सकृच्छ्रमवरुद्धधनः स देहः
सृष्ट्वाऽस्य बीजमवसीदति वृक्षधर्मा ॥ २६ ॥

जिह्वैकतोऽमुमपकर्षति कर्हि तर्षा
शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ।
घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिः
बह्व्यः सपत्न्य इव गेहपतिं लुनन्ति ॥ २७ ॥

सृष्ट्वा पुराणि विविधान्यजयाऽऽत्मशक्त्या
वृक्षान् सरीसृपपशून् खगदंशमत्स्यान् ।
तैस्तैरतुष्टहृदयः पुरुषं विधाय
ब्रह्मावलोकधिषणं मुदमाप देवः ॥ २८ ॥

लब्ध्वा सुदुर्लभमिदं बहुसम्भवान्ते
मानुष्यमर्थदमनित्यमपीह धीरः ।
तूर्णं यतेत न पतेदनुमृत्यु यावत्
निःश्रेयसाय विषयः खलु सर्वतः स्यात् ॥ २९ ॥

एवं सञ्जातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिः ॥ ३० ॥

न ह्येकस्माद् गुरोर्ज्ञानं सुस्थिरं स्यात् सुपुष्कलम्।
ब्रह्मैतदद्वितीयं वै गीयते बहुधर्षिभिः ।। ३१ ।।

श्रीभगवानुवाच

इत्युक्त्वा स यदुं विप्रस्तमामन्त्र्य गभीरधीः ।
वन्दितोऽभ्यर्थितो राज्ञा ययौ प्रीतो यथागतम् ।। ३२ ।।

अवधूतवचः श्रुत्वा पूर्वेषां नः स पूर्वजः ।
सर्वसङ्गविनिर्मुक्तः समचित्तो बभूव ह ।। ३३ ।।

अवधूतगीता समाप्ता



# ५. अवधूतगीता-२

अध्यायः - १

ईश्वरानुग्रहादेव पुंसामद्वैतवासना ।
महद्भयपरित्राणाद्विप्राणामुपजायते ।। १

येनेदं पूरितं सर्वमात्मनैवात्मनाऽऽत्मनि ।
निराकारं कथं वन्दे ह्यभिन्नं शिवमव्ययम् ।। २

पञ्चभूतात्मकं विश्वं मरीचिजलसन्निभम् ।
कस्याप्यहो नमस्कुर्यामहमेको निरञ्जनः ।। ३

आत्मैव केवलं सर्वं भेदाभेदो न विद्यते ।
अस्ति नास्ति कथं ब्रूयां विस्मयः प्रतिभाति मे ।। ४

वेदान्तसारसर्वस्वं ज्ञानं विज्ञानमेव च ।
अहमात्मा निराकारः सर्वव्यापी स्वभावतः ।। ५

योवै सर्वात्मको देवो निष्कलो गगनोपमः।
स्वभावनिर्मलः शुद्धः स एवाहं न संशयः ॥ ६

अहमेवाव्ययोऽनन्तः शुद्धविज्ञानविग्रहः।
सुखं दुःखं न जानामि कथं कस्यापि वर्तते ॥ ७

न मानसं कर्म शुभाशुभं मे
 न कायिकं कर्म शुभाशुभं मे।
न वाचिकं कर्म शुभाशुभं मे
 ज्ञानामृतं शुद्धमतीन्द्रियोऽहम् ॥ ८

मनो वै गगनाकारं मनो वै सर्वतोमुखम्।
मनोऽतीतं मनः सर्वं न मनः परमार्थतः ॥ ९

अहमेकमिदं सर्वं व्योमातीतं निरन्तरम्।
पश्यामि कथमात्मानं प्रत्यक्षं वा तिरोहितम् ॥ १०

त्वमेवमेकं हि कथं न बुध्यसे
 समं हि सर्वेषु विमृष्टमव्ययम्।
सदोदितोऽसि त्वमखण्डितः प्रभो
 दिवा च नक्तं च कथं हि मन्यसे ॥ ११

आत्मानं सततं विद्धि सर्वत्रैकं निरन्तरम्।
अहं ध्याता परं ध्येयमखण्डं खण्ड्यते कथम् ॥ १२

न जातो न मृतोऽसि त्वं न ते देहः कदाचन।
सर्वं ब्रह्मेति विख्यातं ब्रवीति बहुधा श्रुतिः ॥ १३

स बाह्याभ्यन्तरोऽसि त्वं शिवः सर्वत्र सर्वदा।
इतस्ततः कथं भ्रान्तः प्रधावसि पिशाचवत् ॥ १४

संयोगश्च वियोगश्च वर्तते न च ते न मे।
न त्वं नाहं जगन्नेदं सर्वमात्मैव केवलम् ॥ १५

शब्दादिपञ्चकस्यास्य नैवासि त्वं न ते पुनः ।
त्वमेव परमं तत्त्वमतः किं परितप्यसे ।। १६

जन्म मृत्युर्न ते चित्तं बन्धमोक्षौ शुभाशुभौ ।
कथं रोदिषि रे वत्स नामरूपं न ते न मे ।। १७

अहो चित्त कथं भ्रान्तः प्रधावसि पिशाचवत् ।
अभिन्नं पश्य चात्मानं रागत्यागात्सुखी भव ।। १८

त्वमेव तत्त्वं हि विकारवर्जितं
निष्कम्पमेकं हि विमोक्षविग्रहम् ।
न ते च रागो ह्यथवा विरागः
कथं हि सन्तप्यसि कामकामतः ।। १९

वदन्ति श्रुतयः सर्वाः निर्गुणं शुद्धमव्ययम् ।
अशरीरं समं तत्त्वं तन्मां विद्धि न संशयः ।। २०

साकारमनृतं विद्धि निराकारं निरन्तरम् ।
एतत्तत्त्वोपदेशेन न पुनर्भवसम्भवः ।। २१

एकमेव समं तत्त्वं वदन्ति हि विपश्चितः ।
रागत्यागात्पुनश्चित्तमेकानेकं न विद्यते ।। २२

अनात्मरूपं च कथं समाधिः
आत्मस्वरूपं च कथं समाधिः ।
अस्तीति नास्तीति कथं समाधिः
मोक्षस्वरूपं यदि सर्वमेकम् ।। २३

विशुद्धोऽसि समं तत्त्वं विदेहस्त्वमजोऽव्ययः ।
जानामीह न जानामीत्यात्मानं मन्यसे कथम् ।। २४

तत्त्वमस्यादिवाक्येन स्वात्मा हि प्रतिपादितः ।
नेति नेति श्रुतिर्ब्रूयादनृतं पाञ्चभौतिकम् ।। २५

आत्मन्येवात्मना सर्वं त्वया पूर्णं निरन्तरम् ।
ध्याता ध्यानं न ते चित्तं निर्लज्जं ध्यायते कथम् ।। २६

शिवं न जानामि कथं वदामि शिवं न जानामि कथं भजामि ।
अहं शिवश्चेत्परमार्थतत्त्वं समस्वरूपं गगनोपमं च ।। २७

नाहं तत्त्वं समं तत्त्वं कल्पनाहेतुवर्जितम् ।
ग्राह्यग्राहकनिर्मुक्तं स्वसंवेद्यं कथं भवेत् ।। २८

अनन्तरूपं न हि वस्तु किञ्चित्तत्त्वस्वरूपं न हि वस्तु किञ्चित् ।
आत्मैकरूपं परमार्थतत्त्वं न हिंसको वापि न चाप्यहिंसा ।। २९

विशुद्धोऽसि समं तत्त्वं विदेहमजमव्ययम् ।
विभ्रमं कथमात्मार्थे विभ्रान्तोऽहं कथं पुनः ।। ३०

घटे भिन्ने घटाकाशं सुलीनं भेदवर्जितम् ।
शिवेन मनसा शुद्धो न भेदः प्रतिभाति मे ।। ३१

न घटो न घटाकाशो न जीवो जीवविग्रहः ।
केवलं ब्रह्म संविद्धि वेद्यवेदकवर्जितम् ।। ३२

सर्वत्र सर्वदा सर्वमात्मानं सततं ध्रुवम् ।
सर्वं शून्यमशून्यं च तन्मां विद्धि न संशयः ।। ३३

वेदा न लोका न सुरा न यज्ञा वर्णाश्रमो नैव कुलं न जातिः ।
न धूममार्गो न च दीप्तिमार्गो ब्रह्मैकरूपं परमार्थतत्त्वम् ।। ३४

व्याप्यव्यापकनिर्मुक्तः त्वमेकः सफलं यदि ।
प्रत्यक्षं चापरोक्षं च ह्यात्मानं मन्यसे कथम् ।। ३५

अद्वैतं केचिदिच्छन्ति द्वैतमिच्छन्ति चापरे।
समं तत्त्वं न विन्दन्ति द्वैताद्वैतविवर्जितम्॥ ३६

श्वेतादिवर्णरहितं शब्दादिगुणवर्जितम्।
कथयन्ति कथं तत्त्वं मनोवाचामगोचरम्॥ ३७

यदाऽनृतमिदं सर्वं देहादि गगनोपमम्।
तदा हि ब्रह्म संवेत्ति न ते द्वैतपरम्परा॥ ३८

परेण सहजात्माऽपि ह्यभिन्नः प्रतिभाति मे।
व्योमाकारं तथैवैकं ध्याता ध्यानं कथं भवेत्॥ ३९

यत्करोमि यदश्नामि यज्जुहोमि ददामि यत्।
एतत्सर्वं न मे किञ्चिद्विशुद्धोऽहमजोऽव्ययः॥ ४०

सर्वं जगद्विद्धि निराकृतीदं सर्वं जगद्विद्धि विकारहीनम्।
सर्वं जगद्विद्धि विशुद्धदेहं सर्वं जगद्विद्धि शिवैकरूपम्॥ ४१

तत्त्वं त्वं न हि संदेहः किं जानाम्यथवा पुनः।
असंवेद्यं स्वसंवेद्यमात्मानं मन्यसे कथम्॥ ४२

मायाऽमाया कथं तात छायाऽछाया न विद्यते।
तत्त्वमेकमिदं सर्वं व्योमाकारं निरञ्जनम्॥ ४३

आदिमध्यान्तमुक्तोऽहं न बद्धोऽहं कदाचन।
स्वभावनिर्मलः शुद्ध इति मे निश्चिता मतिः॥ ४४

महदादि जगत्सर्वं न किञ्चित्प्रतिभाति मे।
ब्रह्मैव केवलं सर्वं कथं वर्णाश्रमस्थितिः॥ ४५

जानामि सर्वथा सर्वमहमेको निरन्तरम्।
निरालम्बमशून्यं च शून्यं व्योमादिपञ्चकम्॥ ४६

न षण्ढो न पुमान्न स्त्री न बोधो नैव कल्पना।
सानन्दो वा निरानन्दमात्मानं मन्यसे कथम्॥ ४७

षडङ्गयोगान्न तु नैव शुद्धं मनोविनाशान्न तु नैव शुद्धम्।
गुरूपदेशान्न तु नैव शुद्धं स्वयं च तत्त्वं स्वयमेव बुद्धम्॥ ४८

न हि पञ्चात्मको देहो विदेहो वर्तते न हि।
आत्मैव केवलं सर्वं तुरीयं च त्रयं कथम्॥ ४९

न बद्धो नैव मुक्तोऽहं न चाहं ब्रह्मणः पृथक्।
न कर्ता न च भोक्ताऽहं व्याप्यव्यापकवर्जितः॥ ५०

यथा जलं जले न्यस्तं सलिलं भेदवर्जितम्।
प्रकृतिं पुरुषं तद्वदभिन्नं प्रतिभाति मे॥ ५१

यदि नाम न मुक्तोऽसि न बद्धोऽसि कदाचन।
साकारं च निराकारमात्मानं मन्यसे कथम्॥ ५२

जानामि ते परं रूपं प्रत्यक्षं गगनोपमम्।
यथा परं हि रूपं यन्मरीचिजलसन्निभम्॥ ५३

न गुरुर्नोपदेशश्च न चोपाधिर्न मे क्रिया।
विदेहं गगनं विद्धि विशुद्धोऽहं स्वभावतः॥ ५४

विशुद्धोऽस्यशरीरोऽसि न ते चित्तं परात्परम्।
अहं चात्मा परं तत्त्वमिति वक्तुं न लज्जसे॥ ५५

कथं रोदिषि रे चित्त ह्यात्मैवात्माऽऽत्मना भव।
पिब वत्स कलातीतमद्वैतं परमामृतम्॥ ५६

नैव बोधो न चाबोधो न बोधाबोध एव च।
यस्येदृशः सदा बोधः स बोधो नान्यथा भवेत्॥ ५७

ज्ञानं न तर्को न समाधियोगो न देशकालौ न गुरूपदेशः ।
स्वभावसंवित्तिरहं च तत्त्वमाकाशकल्पं सहजं ध्रुवं च ॥ ५८

न जातोऽहं मृतो वापि न मे कर्म शुभाशुभम् ।
विशुद्धं निर्गुणं ब्रह्म बन्धो मुक्तिः कथं मम ॥ ५९

यदि सर्वगतो देवः स्थिरः पूर्णो निरन्तरः ।
अन्तरं हि न पश्यामि स बाह्याभ्यन्तरः कथम् ॥ ६०

स्फुरत्येव जगत्कृत्स्नमखण्डितनिरन्तरम् ।
अहो मायामहामोहो द्वैताद्वैतविकल्पना ॥ ६१

साकारं च निराकारं नेति नेतीति सर्वदा ।
भेदाभेदविनिर्मुक्तो वर्तते केवलः शिवः ॥ ६२

न ते च माता च पिता च बन्धुर्न ते च पत्नी न सुतश्च मित्रम् ।
न पक्षपातो न विपक्षपातः कथं हि संतप्तिरियं हि चित्ते ॥ ६३

दिवा नक्तं न ते चित्तं उदयास्तमयौ न हि ।
विदेहस्य शरीरत्वं कल्पयन्ति कथं बुधाः ॥ ६४

नाविभक्तं विभक्तं च न हि दुःखसुखादि च ।
न हि सर्वमसर्वं च विद्धि चात्मानमव्ययम् ॥ ६५

नाहं कर्ता न भोक्ता च न मे कर्म पुराऽधुना ।
न मे देहो विदेहो वा निर्ममेति ममेति किम् ॥ ६६

न मे रागादिको दोषो दुःखं देहादिकं न मे ।
आत्मानं विद्धि मामेकं विशालं गगनोपमम् ॥ ६७

सखे मनः किं बहुजल्पितेन सखे मनः सर्वमिदं वितर्क्यम् ।
यत्सारभूतं कथितं मया ते त्वमेव तत्त्वं गगनोपमोऽसि ॥ ६८

येन केनापि भावेन यत्र कुत्र मृता अपि।
योगिनस्तत्र लीयन्ते घटाकाशमिवांबरे।। ६९

तीर्थे चान्त्यजगेहे वा नष्टस्मृतिरपि त्यजन्।
समकाले तनुं मुक्तः कैवल्यव्यापको भवेत्।। ७०

धर्मार्थकाममोक्षांश्च द्विपदादिचराचरम्।
मन्यन्ते योगिनः सर्वं मरीचिजलसन्निभम्।। ७१

अतीतानागतं कर्म वर्तमानं तथैव च।
न करोमि न भुञ्जामि इति मे निश्चला मतिः।। ७२

शून्यागारे समरसपूतस्तिष्ठन्नेकः सुखमवधूतः।
चरति हि नग्नस्त्यक्त्वा गर्वं विन्दति केवलमात्मनि सर्वम्।। ७३

त्रितयतुरीयं नहि नहि यत्र विन्दति केवलमात्मनि तत्र।
धर्माधर्मौ नहि नहि यत्र बद्धो मुक्तः कथमिह तत्र।। ७४

विन्दति विन्दति नहि नहि मन्त्रं छन्दोलक्षणं नहि नहि तन्त्रम्।
समरसमग्नो भावितपूतः प्रलपितमेतत्परमवधूतः।। ७५

सर्वशून्यमशून्यं च सत्यासत्यं न विद्यते।
स्वभावभावतः प्रोक्तं शास्त्रसंवित्तिपूर्वकम्।। ७६

इति प्रथमोऽध्यायः।

## अध्यायः - २

बालस्य वा विषयभोगरतस्य वापि
मूर्खस्य सेवकजनस्य गृहस्थितस्य।
एतद्गुरोः किमपि नैव न चिन्तनीयं
रत्नं कथं त्यजति कोऽप्यशुचौ प्रविष्टम्।। १

नैवात्र काव्यगुण एव तु चिन्तनीयो
ग्राह्यः परं गुणवता खलु सार एव ।
सिन्दूरचित्ररहिता भुवि रूपशून्या
पारं न किं तरति नौरिह गन्तुकामान् ।। २

प्रयत्नेन विना येन निश्चलेन चलाचलम् ।
ग्रस्तं स्वभावतः शान्तं चैतन्यं गगनोपमम् ।। ३

अयत्नाच्चालयेद्यस्तु एकमेव चराचरम् ।
सर्वगं तत्कथं भिन्नमद्वैतं वर्तते मम ।। ४

अहमेव परं यस्मात्सारात् सारतरं शिवम् ।
गमागमविनिर्मुक्तं निर्विकल्पं निराकुलम् ।। ५

सर्वावयवनिर्मुक्तं तथाहं त्रिदशार्चितम् ।
सम्पूर्णत्वान्न गृह्णामि विभागं त्रिदशादिकम् ।। ६

प्रमादेन न सन्देहः किं करिष्यामि वृत्तिमान् ।
उत्पद्यन्ते विलीयन्ते बुद्बुदाश्च यथा जले ।। ७

महदादीनि भूतानि समाप्यैवं सदैव हि ।
मृदुद्रव्येषु तीक्ष्णेषु गुडेषु कटुकेषु च ।। ८

कटुत्वं चैव शैत्यत्वं मृदुत्वं च यथा जले ।
प्रकृतिः पुरुषस्तद्वदभिन्नं प्रतिभाति मे ।। ९

सर्वाख्यारहितं यद्यत्सूक्ष्मात्सूक्ष्मतरं परम् ।
मनोबुद्धीन्द्रियातीतमकलङ्कं जगत्पतिम् ।। १०

ईदृशं सहजं यत्र अहं तत्र कथं भवेत् ।
त्वमेव हि कथं तत्र कथं तत्र चराचरम् ।। ११

गगनोपमं तु यत्प्रोक्तं तदेव गगनोपमम्।
चैतन्यं दोषहीनं च सर्वज्ञं पूर्णमेव च ।। १२

पृथिव्यां चरितं नैव मारुतेन च वाहितम्।
वारिणा पिहितं नैव तेजोमध्ये व्यवस्थितम्।। १३

आकाशं तेन संव्याप्तं न तद्व्याप्तं च केनचित्।
स बाह्याभ्यन्तरं तिष्ठत्यवच्छिन्नं निरन्तरम्।। १४

सूक्ष्मत्वात्तददृश्यत्वान्निर्गुणत्वाच्च योगिभिः ।
आलम्बनादि यत्प्रोक्तं क्रमादालम्बनं भवेत्।। १५

सतताऽभ्यासयुक्तस्तु निरालम्बो यदा भवेत्।
तल्लयाल्लीयते नान्तर्गुणदोषविवर्जितः ।। १६

विषविश्वस्य रौद्रस्य मोहमूर्च्छाप्रदस्य च ।
एकमेव विनाशाय ह्यमोघं सहजामृतम्।। १७

भावगम्यं निराकारं साकारं दृष्टिगोचरम्।
भावाभावविनिर्मुक्तमन्तरालं तदुच्यते ।। १८

बाह्यभावं भवेद्विश्वमन्तः प्रकृतिरुच्यते ।
अन्तरादन्तरं ज्ञेयं नारिकेलफलाम्बुवत्।। १९

भ्रान्तिज्ञानं स्थितं बाह्यं सम्यग्ज्ञानं च मध्यगम्।
मध्यान्मध्यतरं ज्ञेयं नारिकेलफलाम्बुवत्।। २०

पौर्णमास्यां यथा चन्द्र एक एवातिनिर्मलः ।
तेन तत्सदृशं पश्येद्द्विधादृष्टिर्विपर्ययः ।। २१

अनेनैव प्रकारेण बुद्धिभेदो न सर्वगः ।
दाता च धीरतामेति गीयते नामकोटिभिः ।। २२

गुरुप्रज्ञाप्रसादेन मूर्खो वा यदि पण्डितः ।
यस्तु संबुध्यते तत्त्वं विरक्तो भवसागरात् ।। २३

रागद्वेषविनिर्मुक्तः सर्वभूतहिते रतः ।
दृढबोधश्च धीरश्च स गच्छेत्परमं पदम् ।। २४

घटे भिन्ने घटाकाश आकाशे लीयते यथा ।
देहाभावे तथा योगी स्वरूपे परमात्मनि ।। २५

उक्तेयं कर्मयुक्तानां मतिर्याऽन्तेऽपि सा गतिः ।
न चोक्ता योगयुक्तानां मतिर्याऽन्तेऽपि सा गतिः ।। २६

या गतिः कर्मयुक्तानां सा च वागिन्द्रियाद्वदेत् ।
योगिनां या गतिः कापि ह्यकथ्या भवतोर्जिता ।। २७

एवं ज्ञात्वा त्वमुं मार्गं योगिनां नैव कल्पितम् ।
विकल्पवर्जनं तेषां स्वयं सिद्धिः प्रवर्तते ।। २८

तीर्थे वान्त्यजगेहे वा यत्र कुत्र मृतोऽपि वा ।
न योगी पश्यते गर्भं परे ब्रह्मणि लीयते ।। २९

सहजमजमचिन्त्यं यस्तु पश्येत्स्वरूपं
घटति यदि यथेष्टं लिप्यते नैव दोषैः ।
सकृदपि तदभावात्कर्म किञ्चिन्न कुर्यात्
तदपि न च विबद्धः संयमी वा तपस्वी ।। ३०

निरामयं निष्प्रतिमं निराकृतिं
निराश्रयं निर्वपुषं निराशिषम् ।
निर्द्वन्द्वनिर्मोहमलुप्तशक्तिकं
तमीशमात्मानमुपैति शाश्वतम् ।। ३१

वेदो न दीक्षा न च मुण्डनक्रिया
गुरुर्न शिष्यो न च यन्त्रसम्पदः ।
मुद्रादिकं चापि न यत्र भासते
तमीशमात्मानमुपैति शाश्वतम् ।। ३२

न शाम्भवं शाक्तिकमाणवं न वा
पिण्डं च रूपं च पदादिकं न वा ।
आरम्भनिष्पत्तिघटादिकं च नो
तमीशमात्मानमुपैति शाश्वतम् ।। ३३

यस्य स्वरूपात्सचराचरं जगद्
उत्पद्यते तिष्ठति लीयतेऽपि वा ।
पयोविकारादिव फेनबुद्बुदाः
तमीशमात्मानमुपैति शाश्वतम् ।। ३४

नासानिरोधो न च दृष्टिरासनं
बोधोऽप्यबोधोऽपि न यत्र भासते ।
नाडीप्रचारोऽपि न यत्र किञ्चित्-
तमीशमात्मानमुपैति शाश्वतम् ।। ३५

नानात्वमेकत्वमुभत्वमन्यता
अणुत्वदीर्घत्वमहत्त्वशून्यता ।
मानत्वमेयत्वसमत्ववर्जितं
तमीशमात्मानमुपैति शाश्वतम् ।। ३६

सुसंयमी वा यदि वा न संयमी
सुसंग्रही वा यदि वा न संग्रही ।
निष्कर्मको वा यदि वा सकर्मकः
तमीशमात्मानमुपैति शाश्वतम् ।। ३७

मनो न बुद्धिर्न शरीरमिन्द्रियं
तन्मात्रभूतानि न भूतपञ्चकम्।
अहंकृतिश्चापि वियत्स्वरूपकं
तमीशमात्मानमुपैति शाश्वतम्॥ ३८

विधौ निरोधे परमात्मतां गते
न योगिनश्चेतसि भेदवर्जिते।
शौचं न वाऽऽशौचमलिङ्गभावना
सर्वं विधेयं यदि वा निषिध्यते॥ ३९

मनो वचो यत्र न शक्तमीरितुं नूनं कथं तत्र गुरूपदेशता।
इमां कथामुक्तवतो गुरोस्तद्युक्तस्य तत्त्वं हि समं प्रकाशते॥४०

इति द्वितीयोऽध्यायः।

अध्यायः - ३

गुणविगुणविभागो वर्तते नैव किञ्चित्
रतिविरतिविहीनं निर्मलं निष्प्रपञ्चम्।
गुणविगुणविहीनं व्यापकं विश्वरूपं
कथमहमिह वन्दे व्योमरूपं शिवं वै॥ १

श्वेतादिवर्णरहितो नियतं शिवश्च
कार्यं हि कारणमिदं हि परं शिवश्च।
एवं विकल्परहितोऽहमलं शिवश्च
स्वात्मानमात्मनि सुमित्र कथं नमामि॥ २

निर्मूलमूलरहितो हि सदोदितोऽहं
निर्धूमधूमरहितो हि सदोदितोऽहम्।
निर्दीपदीपरहितो हि सदोदितोऽहं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ३

निष्कामकाममिह नाम कथं वदामि
निःसङ्गसङ्गमिह नाम कथं वदामि।
निःसारसाररहितं च कथं वदामि
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ४

अद्वैतरूपमखिलं हि कथं वदामि
द्वैतस्वरूपमखिलं हि कथं वदामि।
नित्यं त्वनित्यमखिलं हि कथं वदामि
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ५

स्थूलं हि नो नहि कृशं न गतागतं हि
आद्यन्तमध्यरहितं न परापरं हि।
सत्यं वदामि खलु वै परमार्थतत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ६

संविद्धि सर्वकरणानि नभोनिभानि
संविद्धि सर्वविषयांश्च नभोनिभांश्च।
संविद्धि चैकममलं न हि बन्धमुक्तं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ७

दुर्बोधबोधगहनो न भवामि तात
दुर्लक्ष्यलक्ष्यगहनो न भवामि तात।
आसन्नरूपगहनो न भवामि तात
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ८

निष्कर्मकर्मदहनो ज्वलनो भवामि
निर्दुःखदुःखदहनो ज्वलनो भवामि।
निर्देहदेहदहनो ज्वलनो भवामि
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ ९

निष्पापपापदहनो हि हुताशनोऽहं
निर्धर्मधर्मदहनो हि हुताशनोऽहम्।
निर्बन्धबन्धदहनो हि हुताशनोऽहं
ज्ञानामृतं समरसं गगनोपमोऽहम्।। १०

निर्भावभावरहितो न भवामि वत्स
निर्योगयोगरहितो न भवामि वत्स।
निश्चित्तचित्तरहितो न भवामि वत्स
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ११

निर्मोहमोहपदवीति न मे विकल्पो
निःशोकशोकपदवीति न मे विकल्पः।
निर्लोभलोभपदवीति न मे विकल्पो
ज्ञानामृतं समरसं गगनोपमोऽहम्।। १२

संसारसन्ततिलता न च मे कदाचित्
सन्तोषसन्ततिसुखो न च मे कदाचित्।
अज्ञानबन्धनमिदं न च मे कदाचित्
ज्ञानामृतं समरसं गगनोपमोऽहम्।। १३

संसारसन्ततिरजो न च मे विकारः
सन्तापसन्ततितमो न च मे विकारः।
सत्त्वं स्वधर्मजनकं न च मे विकारो
ज्ञानामृतं समरसं गगनोपमोऽहम्।। १४

सन्तापदुःखजनको न विधिः कदाचित्
सन्तापयोगजनितं न मनः कदाचित्।
यस्मादहङ्कृतिरियं न च मे कदाचित्
ज्ञानामृतं समरसं गगनोपमोऽहम्।। १५

निष्कम्पकम्पनिधनं न विकल्पकल्पं
स्वप्नप्रबोधनिधनं न हिताहितं हि।
निःसारसारनिधनं न चराचरं हि
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ १६

नो वेद्यवेदकमिदं न च हेतुतर्क्यं
वाचामगोचरमिदं न मनो न बुद्धिः।
एवं कथं हि भवतः कथयामि तत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ १७

निर्भिन्नभिन्नरहितं परमार्थतत्त्वं
अन्तर्बहिर्न हि कथं परमार्थतत्त्वम्।
प्राक्सम्भवं न च रतं नहि वस्तु किञ्चित्
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ १८

रागादिदोषरहितं त्वहमेव तत्त्वं
दैवादिदोषरहितं त्वहमेव तत्त्वं।
संसारशोकरहितं त्वहमेव तत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ १९

स्थानत्रयं यदि च नेति कथं तुरीयं
कालत्रयं यदि च नेति कथं दिशश्च।
शान्तं पदं हि परमं परमार्थतत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २०

दीर्घो लघुः पुनरितीह न मे विभागो
विस्तारसंकटमितीह न मे विभागः।
कोणं हि वर्तुलमितीह न मे विभागो
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २१

मातापितादि तनयादि न मे कदाचित्
जातं मृतं न च मनो न च मे कदाचित्।
निर्व्याकुलं स्थिरमिदं परमार्थतत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २२

शुद्धं विशुद्धमविचारमनन्तरूपं
निर्लेपलेपमविचारमनन्तरूपम्।
निष्खण्डखण्डमविचारमनन्तरूपं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २३

ब्रह्मादयः सुरगणाः कथमत्र सन्ति
स्वर्गादयो वसतयः कथमत्र सन्ति।
यद्येकरूपममलं परमार्थतत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २४

निर्नेति नेति विमलो हि कथं वदामि
निःशेषशेषविमलो हि कथं वदामि।
निर्लिङ्गलिङ्गविमलो हि कथं वदामि
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २५

निष्कर्मकर्मपरमं सततं करोमि
निःसङ्गसङ्गरहितं परमं विनोदम्।
निर्देहदेहरहितं सततं विनोदं
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २६

मायाप्रपञ्चरचना न च मे विकारः
कौटिल्यदम्भरचना न च मे विकारः।
सत्यानृतेतिरचना न च मे विकारो
ज्ञानामृतं समरसं गगनोपमोऽहम्॥ २७

सन्ध्यादिकालरहितं न च मे वियोगो
ह्यन्तः प्रबोधरहितं बधिरो न मूकः।
एवं विकल्परहितं न च भावशुद्धं
ज्ञानामृतं समरसं गगनोपमोऽहम्।। २८

निर्नाथिनाथरहितं हि निराकुलं वै
निश्चित्तचित्तविगतं हि निराकुलं वै।
संविद्धि सर्वविगतं हि निराकुलं वै
ज्ञानामृतं समरसं गगनोपमोऽहम्।। २९

कान्तारमन्दिरमिदं हि कथं वदामि
संसिद्धसंशयमिदं हि कथं वदामि।
एवं निरन्तरसमं हि निराकुलं वै
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३०

निर्जीवजीवरहितं सततं विभाति
निर्बीजबीजरहितं सततं विभाति।
निर्वाणबन्धरहितं सततं विभाति
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३१

सम्भूतिवर्जितमिदं सततं विभाति
संसारवर्जितमिदं सततं विभाति।
संहारवर्जितमिदं सततं विभाति
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३२

उल्लेखमात्रमपि ते न च नामरूपं
निर्भिन्नभिन्नमपि ते न हि वस्तु किञ्चित्।
निर्लज्ज मानस करोषि कथं विषादं
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३३

किं नाम रोदिषि सखे न जरा न मृत्युः
किं नाम रोदिषि सखे न च जन्मदुःखम्।
किं नाम रोदिषि सखे न च ते विकारो
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३४

किं नाम रोदिषि सखे न च ते स्वरूपं
किं नाम रोदिषि सखे न च ते विरूपम्।
किं नाम रोदिषि सखे न च ते वयांसि
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३५

किं नाम रोदिषि सखे न च ते वयांसि
किं नाम रोदिषि सखे न च ते मनांसि।
किं नाम रोदिषि सखे न तवेन्द्रियाणि
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३६

किं नाम रोदिषि सखे न च तेऽस्ति कामः
किं नाम रोदिषि सखे न च ते प्रलोभः।
किं नाम रोदिषि सखे न च ते विमोहो
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३७

ऐश्वर्यमिच्छसि कथं न च ते धनानि
ऐश्वर्यमिच्छसि कथं न च ते हि पत्नी।
ऐश्वर्यमिच्छसि कथं न च ते ममेति
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३८

लिङ्गप्रपञ्चजनुषी न च ते न मे च
निर्लज्जमानसमिदं च विभाति भिन्नम्।
निर्भेदभेदरहितं न च ते न मे च
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ३९

नो वाऽणुमात्रमपि ते हि विरागरूपं
नो वाणुमात्रमपि ते हि सरागरूपम्।
नो वाणुमात्रमपि ते हि सकामरूपं
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ४०

ध्याता न ते हि हृदये न च ते समाधिः
ध्यानं न ते हि हृदये न बहिः प्रदेशः।
ध्येयं न चेति हृदये न हि वस्तु कालो
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ४१

यत्सारभूतमखिलं कथितं मया ते
न त्वं न मे न महतो न गुरुर्न शिष्यः।
स्वच्छन्दरूपसहजं परमार्थतत्त्वं
ज्ञानामृतं समरसं गगनोपमोऽहम्।। ४२

कथमिह परमार्थं तत्त्वमानन्दरूपं
कथमिह परमार्थं नैवमानन्दरूपम्।
कथमिह परमार्थं ज्ञानविज्ञानरूपं
यदि परमहमेकं वर्तते व्योमरूपम्।। ४३

दहनपवनहीनं विद्धि विज्ञानमेकं
अवनिजलविहीनं विद्धि विज्ञानरूपम्।
समगमनविहीनं विद्धि विज्ञानमेकं
गगनमिव विशालं विद्धि विज्ञानमेकम्।। ४४

न शून्यरूपं न विशून्यरूपं न शुद्धरूपं न विशुद्धरूपम्।
रूपं विरूपं न भवामि किञ्चित् स्वरूपरूपं परमार्थतत्त्वम्।।४५

मुञ्च मुञ्च हि संसारं त्यागं मुञ्च हि सर्वथा ।
त्यागात्यागविषं शुद्धममृतं सहजं ध्रुवम् ।। ४६

इति तृतीयोऽध्यायः ।

## अध्यायः - ४

नावाहनं नैव विसर्जनं वा पुष्पाणि पत्राणि कथं भवन्ति ।
ध्यानानि मन्त्राणि कथं भवन्ति समासमं चैव शिवार्चनं च ।। १

न केवलं बन्धविबन्धमुक्तो न केवलं शुद्धविशुद्धमुक्तः ।
न केवलं योगवियोगमुक्तः स वै विमुक्तो गगनोपमोऽहम् ।। २

सञ्जायते सर्वमिदं हि तथ्यं सञ्जायते सर्वमिदं वितथ्यम् ।
एवं विकल्पो मम नैव जातः स्वरूपनिर्वाणमनामयोऽहम् ।। ३

न साञ्जनं चैव निरञ्जनं वा न चान्तरं वापि निरन्तरं वा ।
अन्तर्विभिन्नं न हि मे विभाति स्वरूपनिर्वाणमनामयोऽहम् ।।४

अबोधबोधो मम नैव जातो बोधस्वरूपं मम नैव जातम् ।
निर्बोधबोधं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ।। ५

न धर्मयुक्तो न च पापयुक्तो न बन्धयुक्तो न च मोक्षयुक्तः ।
युक्तं त्वयुक्तं न च मे विभाति स्वरूपनिर्वाणमनामयोऽहम् ।।६

परापरं वा न च मे कदाचित् मध्यस्थभावो हि न चारिमित्रम् ।
हिताहितं चापि कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ।। ७

नोपासको नैवमुपास्यरूपं न चोपदेशो न च मे क्रिया च ।
संवित्स्वरूपं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ।। ८

नो व्यापकं व्याप्यमिहास्ति किञ्चिन्न चालयं वापि निरालयं वा ।
अशून्यशून्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम् ।। ९

न ग्राहको ग्राह्यकमेव किञ्चित् न कारणं वा मम नैव कार्यम्।
अचिन्त्यचिन्त्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥

न भेदकं वापि न चैव भेद्यं न वेदकं वा मम नैव वेद्यम्।
गतागतं तात कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ ११

न चास्ति देहो न च मे विदेहो बुद्धिर्मनो मे न हि चेन्द्रियाणि।
रागो विरागश्च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १२

उल्लेखमात्रं न हि भिन्नमुच्चैरुल्लेखमात्रं न तिरोहितं वै।
समासमं मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १३

जितेन्द्रियोऽहं त्वजितेन्द्रियो वा न संयमो मे नियमो न जातः।
जयाजयौ मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १४

अमूर्तमूर्तिर्न च मे कदाचिदाद्यन्तमध्यं न च मे कदाचित्।
बलाबलं मित्र कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १५

मृतामृतं वापि विषाविषं च सञ्जायते तात न मे कदाचित्।
अशुद्धशुद्धं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १६

स्वप्नः प्रबोधो न च योगमुद्रा नक्तं दिवा वापि न मे कदाचित्।
अतुर्यतुर्यं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १७

संविद्धि मां सर्वविसर्वमुक्तं माया विमाया न च मे कदाचित्।
सन्ध्यादिकं कर्म कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १८

संविद्धि मां सर्वसमाधियुक्तं संविद्धि मां लक्ष्यविलक्ष्यमुक्तम्।
योगं वियोगं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ १९

मूर्खोऽपि नाहं न च पण्डितोऽहं मौनं विमौनं न च मे कदाचित्।
तर्कं वितर्कं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ २०

पिता च माता च कुलं न जातिर्जन्मादि मृत्युर्न च मे कदाचित्।
स्नेहं विमोहं च कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥ २१

अस्तं गतो नैव सदोदितोऽहं तेजो वितेजो न च मे कदाचित्।
सन्ध्यादिकं कर्म कथं वदामि स्वरूपनिर्वाणमनामयोऽहम्॥२२

असंशयं विद्धि निराकुलं मामसंशयं विद्धि निरन्तरं माम्।
असंशयं विद्धि निरञ्जनं मां स्वरूपनिर्वाणमनामयोऽहम्॥२३

ध्यानानि सर्वाणि परित्यजन्ति शुभाशुभं कर्म परित्यजन्ति।
त्यागामृतं तात पिबन्ति धीराः स्वरूपनिर्वाणमनामयोऽहम्॥

विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि न हि तत्र।
समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः॥ २५

इति चतुर्थोऽध्यायः।

## अध्यायः - ५

ओं इति गदितं गगनसमं तत् न परापरसारविचार इति।
अविलासविलासनिराकरणं कथमक्षरबिन्दुसमुच्चरणम्॥ १

इति तत्त्वमसिप्रभृतिश्रुतिभिः प्रतिपादितमात्मनि तत्त्वमसि।
त्वमुपाधिविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम्॥ २

अधऊर्ध्वविवर्जितसर्वसमं बहिरन्तरवर्जितसर्वसमम्।
यदि चैकविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम्॥ ३

न हि कल्पितकल्पविचार इति न हि कारणकार्यविचार इति।
पदसन्धिविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम्॥ ४

न हि बोधविबोधसमाधिरिति न हि देशविदेशसमाधिरिति ।
न हि कालविकालसमाधिरिति किमु रोदिषि मानसि सर्वसमम्॥

न हि कुम्भनभो न हि कुम्भ इति न हि जीववपुर्न हि जीव इति ।
न हि कारणकार्यविभाग इति किमु रोदिषि मानसि सर्वसमम् ॥

इह सर्वनिरन्तरमोक्षपदं लघुदीर्घविचारविहीन इति ।
न हि वर्तुलकोणविभाग इति किमु रोदिषि मानसि सर्वसमम् ॥

इह शून्यविशून्यविहीन इति इह शुद्धविशुद्धविहीन इति ।
इह सर्वविसर्वविहीन इति किमु रोदिषि मानसि सर्वसमम् ॥ ८

न हि भिन्नविभिन्नविचार इति बहिरन्तरसन्धिविचार इति ।
अरिमित्रविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ ९

न हि शिष्यविशिष्यस्वरूप इति न चराचरभेदविचार इति ।
इह सर्वनिरन्तरमोक्षपदं किमु रोदिषि मानसि सर्वसमम् ॥ १०

ननु रूपविरूपविहीन इति ननु भिन्नविभिन्नविहीन इति ।
ननु सर्गविसर्गविहीन इति किमु रोदिषि मानसि सर्वसमम् ॥ ११

न गुणागुणपाशनिबन्ध इति मृतजीवनकर्म करोमि कथम् ।
इति शुद्धनिरञ्जनसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥

इह भावविभावविहीन इति इह कामविकामविहीन इति ।
इह बोधतमं खलु मोक्षसमं किमु रोदिषि मानसि सर्वसमम् ॥ १३

इह तत्त्वनिरन्तरतत्त्वमिति न हि सन्धिविसन्धिविहीन इति ।
यदि सर्वविवर्जितसर्वसमं किमु रोदिषि मानसि सर्वसमम् ॥ १४

अनिकेतकुटी परिवारसमं इह सङ्गविसङ्गविहीनपरम् ।
इह बोधविबोधविहीनपरं किमु रोदिषि मानसि सर्वसमम् ॥ १५

अविकारविकारमसत्यमिति अविलक्षविलक्षमसत्यमिति।
यदि केवलमात्मनि सत्यमिति किमु रोदिषि मानसि सर्वसमम्॥

इह सर्वसमं खलु जीव इति इह सर्वनिरन्तरजीव इति।
इह केवलनिश्चलजीव इति किमु रोदिषि मानसि सर्वसमम्॥१७

अविवेकविवेकमबोध इति अविकल्पविकल्पमबोध इति।
यदि चैकनिरन्तरबोध इति किमु रोदिषि मानसि सर्वसमम्॥

न हि मोक्षपदं न हि बन्धपदं न हि पुण्यपदं न हि पापपदम्।
न हि पर्णपदं न हि रिक्तपदं किमु रोदिषि मानसि सर्वसमम्॥

यदि वर्णविवर्णविहीनसमं यदि कारणकार्यविहीनसमम्।
यदि भेदविभेदविहीनसमं किमु रोदिषि मानसि सर्वसमम्॥ २०

इह सर्वनिरन्तरसर्वचिते इह केवलनिश्चलसर्वचिते।
द्विपदादिविवर्जितसर्वचिते किमु रोदिषि मानसि सर्वसमम्॥

अतिसर्वनिरन्तरसर्वगतं अतिनिर्मलनिश्चलसर्वगतम्।
दिनरात्रिविवर्जितसर्वगतं किमु रोदिषि मानसि सर्वसमम्॥

न हि बन्धविबन्धसमागमनं न हि योगवियोगसमागमनम्।
न हि तर्कवितर्कसमागमनं किमु रोदिषि मानसि सर्वसमम्॥२३

इह कालविकालनिराकरणं अणुमात्रकृशानुनिराकरणम्।
न हि केवलसत्यनिराकरणं किमु रोदिषि मानसि सर्वसमम्॥

इह देहविदेहविहीन इति ननु स्वप्नसुषुप्तिविहीनपरम्।
अभिधानविधानविहीनपरं किमु रोदिषि मानसि सर्वसमम्॥

गगनोपमशुद्धविशालसमं अतिसर्वविवर्जितसर्वसमम्।
गतसारविसारविकारसमं किमु रोदिषि मानसि सर्वसमम्॥ २६

इह धर्मविधर्मविरागतरं इह वस्तुविवस्तुविरागतरम्।
इह कामविकामविरागतरं किमु रोदिषि मानसि सर्वसमम्।। २७

सुखदुःखविवर्जितसर्वसममिह शोकविशोकविहीनपरम्।
गुरुशिष्यविवर्जिततत्त्वपरं किमु रोदिषि मानस सर्वसमम्।। २८

न किलाङ्कुरसारविसार इति न चलाचलसाम्यविसाम्यमिति।
अविचारविचारविहीनमिति किमु रोदिषि मानसि सर्वसमम्।।

इह सारसमुच्चयसारमिति कथितं निजभावविभेद इति।
विषये करणत्वमसत्यमिति किमु रोदिषि मानसि सर्वसमम्।।

बहुधा श्रुतयः प्रवदन्ति यतो वियदादिरिदं मृगतोयसमम्।
यदि चैकनिरन्तरसर्वसमं किमु रोदिषि मानसि सर्वसमम्।। ३१

विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि न हि तत्र।
समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ।। ३२

इति पञ्चमोऽध्यायः।

## अध्यायः - ६

बहुधा श्रुतयः प्रवदन्ति वयं वियदादिरिदं मृगतोयसमम्।
यदि चैकनिरन्तरसर्वशिवमुपमेयमथो ह्युपमा च कथम्।। १

अविभक्तिविभक्तिविहीनपरं ननु कार्यविकार्यविहीनपरम्।
यदि चैकनिरन्तरसर्वशिवं यजनं च कथं तपनं च कथम्।। २

मन एव निरन्तरसर्वगतं ह्यविशालविशालविहीनपरम्।
मन एव निरन्तरसर्वशिवं मनसापि कथं वचसा च कथम्।। ३

दिनरात्रिविभेदनिराकरणमुदितानुदितस्य निराकरणम्।
यदि चैकनिरन्तरसर्वशिवं रविचन्द्रमसौ ज्वलनश्च कथम्।। ४

गतकामविकामविभेद इति गतचेष्टविचेष्टविभेद इति।
यदि चैकनिरन्तरसर्वशिवं बहिरन्तरभिन्नमतिश्च कथम्।। ५

यदि सारविसारविहीन इति यदि शून्यविशून्यविहीन इति।
यदि चैकनिरन्तरसर्वशिवं प्रथमं च कथं चरमं च कथम्।। ६ ।।

यदि भेदविभेदनिराकरणं यदि वेदकवेद्यनिराकरणम्।
यदि चैकनिरन्तरसर्वशिवं तृतीयं च कथं तुरीयं च कथम्।। ७

गदिताविदितं न हि सत्यमिति विदिताविदितं न हि सत्यमिति।
यदि चैकनिरन्तरसर्वशिवं विषयेन्द्रियबुद्धिमनांसि कथम्।। ८

गगनं पवनो न हि सत्यमिति धरणी दहनो न हि सत्यमिति।
यदि चैकनिरन्तरसर्वशिवं जलदश्च कथं सलिलं च कथम्।। ९ ।।

यदि कल्पितलोकनिराकरणं यदि कल्पितदेवनिराकरणम्।
यदि चैकनिरन्तरसर्वशिवं गुणदोषविचारमतिश्च कथम्।। १० ।।

मरणामरणं हि निराकरणं करणाकरणं हि निराकरणम्।
यदि चैकनिरन्तरसर्वशिवं गमनागमनं हि कथं वदति।। ११ ।।

प्रकृतिः पुरुषो न हि भेद इति न हि कारणकार्यविभेद इति।
यदि चैकनिरन्तरसर्वशिवं पुरुषापुरुषं च कथं वदति।। १२ ।।

तृतीयं न हि दुःखसमागमनं न गुणाद्द्वितीयस्य समागमनम्।
यदि चैकनिरन्तरसर्वशिवं स्थविरश्च युवा च शिशुश्च कथम् ।।

ननु आश्रमवर्णविहीनपरं ननु कारणकर्तृविहीनपरम्।
यदि चैकनिरन्तरसर्वशिवमविनष्टविनष्टमतिश्च कथम्।। १४ ।।

ग्रसिताग्रसितं च वितथ्यमिति जनिताजनितं च वितथ्यमिति।
यदि चैकनिरन्तरसर्वशिवमविनाशि विनाशि कथं हि भवेत्।।

पुरुषापुरुषस्य विनष्टमिति वनितावनितस्य विनष्टमिति।
यदि चैकनिरन्तरसर्वशिवमविनोदविनोदमतिश्च कथम्।। १६

यदि मोहविषादविहीनपरो यदि संशयशोकविहीनपरः।
यदि चैकनिरन्तरसर्वशिव महमेति ममेति कथं च पुनः।। १७

ननु धर्मविधर्मविनाश इति ननु बन्धविबन्धविनाश इति।
यदि चैकनिरन्तरसर्वशिवमिह दुःखविदुःखमतिश्च कथम्।। १८

न हि याज्ञिकयज्ञविभाग इति न हुताशनवस्तुविभाग इति।
यदि चैकनिरन्तरसर्वशिवं वद कर्मफलानि भवन्ति कथम्।। १९

ननु शोकविशोकविमुक्त इति ननु दर्पविदर्पविमुक्त इति।
यदि चैकनिरन्तरसर्वशिवं ननु रागविरागमतिश्च कथम्।। २० ।।

न हि मोहविमोहविकार इति न हि लोभविलोभविकार इति।
यदि चैकनिरन्तरसर्वशिवं ह्यविवेकविवेकमतिश्च कथम्।। २१ ।।

त्वमहं न हि हन्त कदाचिदपि कुलजातिविचारमसत्यमिति।
अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम्।। २२

गुरुशिष्यविचारविशीर्ण इति उपदेशविचारविशीर्ण इति।
अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम्।। २३

न हि कल्पितदेहविभाग इति न हि कल्पितलोकविभाग इति।
अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम्।। २४

सरजो विरजो न कदाचिदपि ननु निर्मलनिश्चलशुद्ध इति।
अहमेव शिवः परमार्थ इति अभिवादनमत्र करोमि कथम्।। २५

न हि देहविदेहविकल्प इति अनृतं चरितं न हि सत्यमिति।
अहमेव शिवः परमार्थ इनि अभिवादनमत्र करोमि कथम्।। २६

विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि न हि तत्र ।
समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ॥ २७

इति षष्ठोऽध्यायः ।

अध्यायः -७

रथ्याकर्पटविरचितकन्थः पुण्यापुण्यविवर्जितपन्थः ।
शून्यागारे तिष्ठति नग्नः शुद्धनिरञ्जनसमरसमग्नः ॥ १

लक्ष्यालक्ष्यविवर्जितलक्ष्यो युक्तायुक्तविवर्जितदक्षः ।
केवलतत्त्वनिरञ्जनपूतो वादविवादः कथमवधूतः ॥ २

आशापाशविबन्धनमुक्ताः शौचाचारविवर्जितयुक्ताः ।
एवं सर्वविवर्जितशान्तास्तत्त्वं शुद्धनिरञ्जनवन्तः ॥ ३

कथमिह देहविदेहविचारः कथमिह रागविरागविचारः ।
निर्मलनिश्चलगगनाकारं स्वयमिह तत्त्वं सहजाकारम् ॥ ४

कथमिह तत्त्वं विन्दति यत्र रूपमरूपं कथमिह तत्र ।
गगनाकारः परमो यत्र विषयीकरणं कथमिह तत्र ॥ ५

गगनाकारनिरन्तरहंसस्तत्त्वविशुद्धनिरञ्जनहंसः ।
एवं कथमिह भिन्नविभिन्नं बन्धविबन्धविकारविभिन्नम् ॥ ६

केवलतत्त्वनिरन्तरसर्वं योगवियोगौ कथमिह गर्वम् ।
एवं परमनिरन्तरसर्वमेवं कथमिह सारविसारम् ॥ ७

केवलतत्त्वनिरञ्जनसर्वं गगनाकारनिरन्तरशुद्धम् ।
एवं कथमिह सङ्गविसङ्गं सत्यं कथमिह रङ्गविरङ्गम् ॥ ८

योगवियोगै रहितो योगी भोगविभोगै रहितो भोगी ।
एवं चरति हि मन्दं मन्दं मनसा कल्पितसहजानन्दम् ॥ ९

बोधविबोधैः सततं युक्तो द्वैताद्वैतैः कथमिह मुक्तः ।
सहजो विरजः कथमिह योगी शुद्धनिरञ्जनसमरसभोगी ।। १०

भग्नाभग्नविवर्जितभग्नो लग्नालग्नविवर्जितलग्नः ।
एवं कथमिह सारविसारः समरसतत्त्वं गगनाकारः ।। ११

सततं सर्वविवर्जितयुक्तः सर्वं तत्त्वविवर्जितमुक्तः ।
एवं कथमिह जीवितमरणं ध्यानाध्यानैः कथमिह करणम् ।। १२

इन्द्रजालमिदं सर्वं यथा मरुमरीचिका ।
अखण्डितमनाकारो वर्तते केवलः शिवः ।। १३

धर्मादौ मोक्षपर्यन्तं निरीहाः सर्वथा वयम् ।
कथं रागविरागैश्च कल्पयन्ति विपश्चितः ।। १४

विन्दति विन्दति न हि न हि यत्र छन्दोलक्षणं न हि न हि तत्र ।

समरसमग्नो भावितपूतः प्रलपति तत्त्वं परमवधूतः ।। १५

इति सप्तमोऽध्यायः ।

## अध्यायः - ८

त्वद्यात्रया व्यापकता हता ते ध्यानेन चेतःपरता हता ते ।
स्तुत्या मया वाक्परता हता ते क्षमस्व नित्यं त्रिविधापराधान्।।१

कामैरहतधीर्दान्तो मृदुः शुचिरकिञ्चनः ।
अनीहो मितभुक् शान्तः स्थिरो मच्छरणो मुनिः ।। २

अप्रमत्तो गभीरात्मा धृतिमान् जितषड्गुणः ।
अमानी मानदः कल्पो मैत्रः कारुणिकः कविः ।। ३

कृपालुरकृतद्रोहस्तितिक्षुः सर्वदेहिनाम् ।
सत्यसारोऽनवद्यात्मा समः सर्वोपकारकः ।। ४

अवधूतलक्षणं वर्णैर्ज्ञातिव्यं भगवत्तमैः ।
वेदवर्णार्थतत्त्वज्ञैर्वेदवेदान्तवादिभिः ।। ५

आशापाशविनिर्मुक्त आदिमध्यान्तनिर्मलः ।
आनन्दे वर्तते नित्यमकारं तस्य लक्षणम् ।। ६

वासना वर्जिता येन वक्तव्यं च निरामयम् ।
वर्तमानेषु वर्तेत वकारं तस्य लक्षणम् ।। ७

धूलिधूसरगात्राणि धूतचित्तो निरामयः ।
धारणाध्याननिर्मुक्तो धूकारस्तस्य लक्षणम् ।। ८

तत्त्वचिन्ता धृता येन चिन्ताचेष्टाविवर्जितः ।
तमोऽहंकारनिर्मुक्तस्तकारस्तस्य लक्षणम् ।। ९

दत्तात्रेयावधूतेन निर्मितानन्दरूपिणा ।
ये पठन्ति च शृण्वन्ति तेषां नैव पुनर्भवः ।। १०

इति अष्टमोऽध्यायः

## ६. जीवन्मुक्तिगीता

असतो मा सद्गमय । तमसो मा ज्योतिर्गमय ।
मृत्योर्मा अमृतं गमय ।।

सर्वभूतान्तरस्थाय नित्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ।। १ ।।

जीवन्मुक्तिश्च या मुक्तिः सा मुक्तिः पिण्डपातने ।
या मुक्तिः पिण्डपातेन सा मुक्तिः शुनि शूकरे ।। २ ।।

जीवः शिवः सर्वमेव भूतेष्वेवं व्यवस्थितः ।
एवमेवाभिपश्यन् हि जीवन्मुक्तः स उच्यते ।। ३ ।।

एवं ब्रह्म जगत्सर्वमखिलं भासते रविः ।
संस्थितं सर्वभूतानां जीवन्मुक्तः स उच्यते ।। ४ ।।

एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ।
आत्मज्ञानी तथैवैको जीवन्मुक्तः स उच्यते ।। ५ ।।

सर्वभूते स्थितं ब्रह्म भेदाभेदो न विद्यते ।
एकमेवाभिपश्यंश्च जीवन्मुक्तः स उच्यते ।। ६ ।।

तत्त्वं क्षेत्रं व्योमातीतमहं क्षेत्रज्ञ उच्यते ।
अहं कर्ता च भोक्ता च जीवन्मुक्तः स उच्यते ।। ७ ।।

कर्मेन्द्रियपरित्यागी ध्यानवर्जितचेतसः ।
आत्मज्ञानी तथैवेको जीवन्मुक्तः स उच्यते ।। ८ ।।

तत्त्वं केवलं कर्म शोकमोहादिवर्जितम् ।
शुभाशुभपरित्यागी जीवन्मुक्तः स उच्यते ।। ९ ।।

कर्म सर्वत्र आदिष्टं न जानामि च किंचन ।
कर्म ब्रह्म विजानाति जीवन्मुक्तः स उच्यते ।। १० ।।

चिन्मयं व्यापितं सर्वमाकाशं जगदीश्वरम् ।
सहितं सर्वभूतानां जीवन्मुक्तः स उच्यते ।। ११ ।।

अनादिवर्ति भूतानां जीवः शिवो न हन्यते ।
निर्वैरः सर्वभूतेषु जीवन्मुक्तः स उच्यते ।। १२ ।।

आत्मा गुरुस्त्वं विश्वं च चिदाकाशो न लिप्यते ।
गतागतं द्वयोर्नास्ति जीवन्मुक्तः स उच्यते ।। १३ ।।

गर्भध्यानेन पश्यन्ति ज्ञानिनां मन उच्यते ।
सोऽहं मनो विलीयन्ते जीवन्मुक्तः स उच्यते ।। १४ ।।

ऊर्ध्वध्यानेन पश्यन्ति विज्ञानं मन उच्यते।
शून्यं लयं च विलयं जीवन्मुक्तः स उच्यते ।। १५ ।।

अभ्यासे रमते नित्यं मनो ध्यानलयं गतम्।
बन्धमोक्षद्वयं नास्ति जीवन्मुक्तः स उच्यते ।। १६ ।।

एकाकी रमते नित्यं स्वभावगुणवर्जितम्।
ब्रह्मज्ञानरसास्वादी जीवन्मुक्तः स उच्यते ।। १७ ।।

हृदि ध्यानेन पश्यन्ति प्रकाशं क्रियते मनः ।
सोऽहं हंसेति पश्यन्ति जीवन्मुक्तः स उच्यते ।। १८ ।।

शिवशक्तिसमात्मानं पिण्डब्रह्माण्डमेव च।
चिदाकाशं हृदं मोहं जीवन्मुक्तः स उच्यते ।। १९ ।।

जाग्रत्स्वप्नसुषुप्तिं च तुरीयावस्थितं सदा।
सोऽहं मनो विलीयेत जीवन्मुक्तः स उच्यते ।। २० ।।

सोऽहं स्थितं ज्ञानमिदं सूत्रेषु मणिवत्परम्।
सोऽहं ब्रह्म निराकारं जीवन्मुक्तः स उच्यते ।। २१ ।।

मन एव मनुष्याणां भेदाभेदस्य कारणम्।
विकल्पनैव संकल्पं जीवन्मुक्तः स उच्यते ।। २२ ।।

मन एव विदुः प्राज्ञाः सिद्धसिद्धान्त एव च।
यदा दृढं तदा मोक्षो जीवन्मुक्तः स उच्यते ।। २३ ।।

योगाभ्यासी मनः श्रेष्ठोऽन्तस्त्यागी बहिर्जडः ।
अन्तस्त्यागी बहिस्त्यागी जीवन्मुक्तः स उच्यते ।। २४ ।।

जीवन्मुक्तिगीता समाप्ता

***

# ७. श्री गुरुगीता

## (पूर्वाङ्गम्)

यं ब्रह्म वेदान्तविदो वदन्ति परं प्रधानं पुरुषं तथान्ये ।
विश्वोद्गतेः कारणमीश्वरं वा तस्मै नमो विघ्ननिवारणाय ।।

ऋष्यादिन्यासः-

ओं अस्य श्री गुरुगीतामालामन्त्रस्य भगवान् सदाशिव ऋषिः । विराट् छन्दः । श्रीगुरुः परमात्मा देवता । हं बीजम् । सः शक्तिः । सोहं कीलकम् ।। श्रीगुरु-कृपा-प्रसाद-सिद्ध्यर्थे जपे विनियोगः ।

करन्यासः-

ओं हंसां सूर्यात्मने अंगुष्ठाभ्यां नमः । ओं हंसीं सोमात्मने तर्जनीभ्यां नमः । ओं हंसूं निरंजनात्मने मध्यमाभ्यां नमः ।
ओं हंसैं निराभासात्मने अनामिकाभ्यां नमः ।
ओं हंसौं अतनूसूक्ष्मात्मने कनिष्ठिकाभ्यां नमः ।
ओं हंसः अव्यक्तात्मने करतल-करपृष्ठाभ्यां नमः ।

हृदयादि न्यासः-

ओं हंसां सूर्यात्मने हृदयाय नमः ।

ओं हंसीं सोमात्मने शिरसे स्वाहा ।

ओं हंसूं निरंजनात्मने शिखायै वषट् ।

ओं हंसैं निराभासात्मने कवचाय हुम् ।

ओं हंसौं अतनूसूक्ष्मात्मने नेत्रत्रयाय वौषट् ।

ओं हंसः अव्यक्तात्मने अस्त्राय फट् ।।

भूर्भुवस्सुवरोमिति दिग्बन्धः ।। ध्यानम् ।।

हंसाभ्यां परिवृत्तपत्रकमलैर्दिव्यैर्जगत्कारणं
विश्वोत्कीर्णमनेकदेह-निलयं स्वच्छन्द-मानन्दकम्।
आद्यन्तैक-मखण्ड-चिद्घनरसं पूर्णं ह्यनन्तं शुभं
प्रत्यक्षाक्षरविग्रहं गुरुपदं ध्यायेद्विभुं शाश्वतम्॥ १

विश्वव्यापिन-मादिदेव-ममलं नित्यं परं निष्कलं
नित्योद्बुद्ध-सहस्र-पत्र कमले लुप्ताक्षरे मण्डपे।
नित्यानन्दमयं सुखैकनिलयं नित्यं शिवं स्वप्रभं
ध्यायेद्धंसपरं परात्परतरं स्वच्छन्द-सर्वागमम्॥ २

ऊर्ध्वाम्नायगुरोः पदं त्रिभुवनौंकाराख्यसिंहासनं
सिद्धाचारसमस्तवेदपठितं षट्चक्रसंचारिणम्।
अद्वैतस्फुरदग्निमेकममलं पूर्ण प्रभाशोभितं
शान्तं श्रीगुरुपंकजं भज मनश्चैतन्यचन्द्रोदयम्॥ ३

सहस्रदल पंकजे सकलशीत-रश्मिप्रभं
वराभय-कराम्बुजं विमलगन्धपुष्पाम्बरम्।
प्रसन्नवदनेक्षणं सकलदेवता-रूपिणं
स्मरेच्छिरसि हंसकं तदभिधान पूर्वं गुरुम्॥ ४

नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम्।
शिरसा योगपीठस्थं मुक्तिकामार्थ-सिद्धिदम्॥ ५

प्रातः शिरसि शुक्लाब्जे द्विनेत्रं द्विभुजं गुरुम्।
वराभयकरं शान्तं स्मरेत्तन्नामपूर्वकम्॥ ६

प्रसन्न-वदनाक्षं च सर्वदेवस्वरूपिणम्।
तत्पादोदकजाधारा निपतन्ती स्वमूर्धनि॥ ७

तया संक्षालयेद्देहे ह्यन्तर्बाह्यगतं मलम्।
तत्क्षणाद्विरजो भूत्वा जायते स्फटिकोपमः॥ ८

तीर्थानि दक्षिणे पादे वेदास्तन्मुखमाश्रिताः ।
पूजयेदर्चितं तं तु तदभिध्यान पूर्वकम् ।। ९

पंचोपचार पूजा ।। लं- पृथिव्यात्मने गन्धं समर्पयामि । हं- आकाशात्मने पुष्पैः पूजयामि । यं- वाय्वात्मने धूपमाघ्रापयामि । रं- अग्न्यात्मने दीपं दर्शयामि । वं अमृतात्मने महानैवेद्यं निवेदयामि । सं सर्वात्मने सर्वोपचारपूजां समर्पयामि ।।



# श्रीगुरुगीता

## स्कान्दे ब्रह्मसंहितायां उत्तरखण्डतः उद्धृता

### ।। प्रथमोऽध्यायः ।।

अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने ।
समस्त जगदाधार-मूर्तये ब्रह्मणे नमः ।। १

ऋषय ऊचुः-

गुह्याद्गुह्यतमं सारं गुरुगीता विशेषतः ।
त्वत्प्रसादाच्च श्रोतव्या तत्सर्वं सूत ब्रूहि नः ।। २

सूत उवाच-

कैलासशिखरे रम्ये भक्तिसाधन हेतवे ।
प्रणम्य पार्वती भक्त्या शंकरं परिपृच्छति ।। ३

पार्वत्युवाच-

ओं नमो देवदेवेश परात्पर जगद्गुरो ।
सदाशिव महादेव गुरुदीक्षां प्रयच्छ मे ।। ४

भगवन् सर्वधर्मज्ञ व्रतानां व्रतनायकम्।
ब्रूहि मे कृपया शम्भो गुरुमाहात्म्यमुत्तमम्॥ ५

केन मार्गेण भो स्वामिन् देही ब्रह्ममयो भवेत्।
तत्कृपां कुरु मे स्वामिन् नमामि चरणौ तव॥ ६

श्री महादेव उवाच-

मम रूपासि देवि त्वं त्वद्भक्त्यर्थं वदाम्यहम्।
लोकोपकारकः प्रश्नो न केनापि कृतः पुरा॥ ७

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ ८

यो गुरुः स शिवः प्रोक्तो यः शिवः स गुरुः स्मृतः।
विकल्पं यस्तु कुर्वीत स नरो गुरुतल्पगः॥ ९

दुर्लभं त्रिषु लोकेषु तच्छृणुष्व वदाम्यहम्।
गुरुर्ब्रह्म विना नान्यत्सत्यं सत्यं वरानने॥ १०

वेदशास्त्रपुराणानि चेतिहासादिकानि च।
मन्त्रयन्त्र-विद्यादीनि मोहनोच्चाटनादिकम्॥ ११

शैवशाक्तागमादीनि ह्यन्ये च बहवो मताः।
अपभ्रंशाः समस्तानां जीवानां भ्रान्तचेतसाम्॥ १२

जपस्तपो व्रतं तीर्थं यज्ञो दानं तथैव च।
गुरुतत्त्वमविज्ञाय सर्वं व्यर्थं भवेत् प्रिये॥ १३

गुरुबुद्ध्यात्मनो नान्यत् सत्यं सत्यं वरानने।
तल्लाभार्थं प्रयत्नस्तु कर्तव्यश्च मनीषिभिः॥ १४

गूढाविद्या जगन्माया देहश्चाज्ञानसंभवः।
विज्ञानं तत्प्रसादेन गुरुशब्देन कथ्यते॥ १५

यदंघ्रिकमलद्वन्द्वं द्वन्द्वतापनिवारकम्।
तारकं भवसिन्धोश्च श्रीगुरुं प्रणमाम्यहम्॥ १६

देही ब्रह्म भवेद्यस्मात् त्वत्कृपार्थं वदामि तत्।
सर्वपापविशुद्धात्मा श्रीगुरोः पादसेवनात्॥ १७

सर्वतीर्थावगाहस्य संप्राप्नोति फलं नरः।
गुरोः पादोदकं पीत्वा शेषं शिरसि धारयन्॥ १८

शोषणं पापपंकस्य दीपनं ज्ञानतेजसः।
गुरोः पादोदकं सम्यक् संसारार्णवतारकम्॥ १९

अज्ञानमूलहरणं जन्मकर्म-निवारणम्।
ज्ञानवैराग्य सिद्ध्यर्थं गुरुपादोदकं पिबेत्॥ २०

गुरुपादोदकं पानं गुरोरुच्छिष्ट भोजनम्।
गुरुमूर्तेः सदा ध्यानं गुरोर्नाम सदा जपः॥ २१

स्वदेशिकस्यैव च नामकीर्तनं
भवेदनन्तस्य शिवस्य कीर्तनम्।
स्वदेशिकस्यैव च नामचिन्तनं
भवेदनन्तस्य शिवस्य चिन्तनम्॥ २२

यत्पादरेणुर्वै नित्यं कोऽपि संसारवारिधौ।
सेतुबन्धायते नाथं देशिकं तमुपास्महे॥ २३

यस्मादनुग्रहं लब्ध्वा महदज्ञानमुत्सृजेत्।
तस्मै श्रीदेशिकेन्द्राय नमश्चाभीष्टसिद्धये॥ २४

(यदनुग्रहमार्गेण शोकमोहौ विनश्यतः।
तस्मै श्रीदेशिकेन्द्राय नमोऽस्तु परमात्मने॥)

काशीक्षेत्रं निवासश्च जाह्नवी चरणोदकम्।
गुरुर्विश्वेश्वरः साक्षात्तारकं ब्रह्म निश्चयः ।। २५

गुरोः पादांकितं यत्तु गयास्ते अक्षयो वटः ।
तीर्थराजः प्रयागोऽसौ गुरुमूर्त्यै नमो नमः ।। २६

(गुरुसेवा गया प्रोक्ता देहः स्यादक्षयो वटः ।
तत्पादं विष्णुपादं स्यात् तत्र दत्तमनस्ततम्।। )

गुरुमूर्तिं स्मरेन्नित्यं गुरोर्नाम सदा जपेत्।
गुरोराज्ञां प्रकुर्वीत गुरोरन्यं न भावयेत्।। २७

गुरुवक्त्रे स्थितं ब्रह्म प्राप्यते तत्प्रसादतः ।
गुरोर्ध्यानं सदा कुर्यात् पुरुषं स्वैरिणी यथा ।। २८

स्वाश्रमं च स्वजातिं च स्वकीर्तिं पुष्टिवर्धनम्।
एतत्सर्वं परित्यज्य गुरोरन्यं न भावयेत्।। २९

अनन्याश्चिन्तयन्तो ये सुलभं परमं सुखम्।
तस्मात्सर्वप्रयत्नेन गुरोराराधनं कुरु।। ३०

गुरुवक्त्रे स्थिता विद्या गुरुभक्त्या च लभ्यते।
त्रैलोक्ये स्फुटवक्तारो देवर्षिपितृमानवाः ।। ३१

गुकारश्चान्धकारो हि रुकारस्तेज उच्यते ।
अज्ञानग्रासकं ब्रह्म गुरुरेव न संशयः ।। ३२

गुकारश्चान्धकारस्तु रुकारस्तन्निरोधकृत्।
अन्धकारविनाशित्वाद् गुरुरित्यभिधीयते ।। ३३

गुकारश्च गुणातीतो रूपातीतो रुकारकः ।
गुणरूपविहीनत्वाद् गुरुरित्यभिधीयते।। ३४

गुकारः प्रथमो वर्णो मायादिगुणभासकः ।
रुकारोऽस्ति परं ब्रह्म माया-भ्रान्ति-विमोचकम् ।। ३५

एवं गुरुपदं श्रेष्ठं देवानामपि दुर्लभम् ।
हाहाहूहूगणैश्चैव गन्धर्वाद्यैश्च पूज्यते ।। ३६

ध्रुवं तेषां च सर्वेषां नास्ति तत्त्वं गुरोः परम् ।
गुरोराराधनं कुर्यात् स जीवत्वं निवेदयेत् ।। ३७

आसनं शयनं वस्त्रं वाहनं भूषणादिकम् ।
साधकेन प्रदातव्यं गुरुसन्तोषकारणम् ।। ३८

कर्मणा मनसा वाचा सर्वदाऽऽराधयेद् गुरुम् ।
दीर्घदण्डं नमस्कृत्य निर्लज्जो गुरुसन्निधौ ।। ३९

शरीरमिन्द्रियं प्राणमर्थस्वजन बान्धवान् ।
आत्म-दारादिकं सर्वं सद्गुरुभ्यो निवेदयेत् ।। ४०

गुरुरेको जगत्सर्वं ब्रह्मविष्णुशिवात्मकम् ।
गुरोः परतरं नास्ति तस्मात्संपूजयेद्गुरुम् ।। ४१

सर्व-श्रुति-शिरोरत्न-विराजित- पदाम्बुजम् ।
वेदान्तार्थ-प्रवक्तारं तस्मात्संपूजयेद्गुरुम् । ४२

यस्य स्मरणमात्रेण ज्ञानमुत्पद्यते स्वयम् ।
स एव सर्वसंपत्तिस्तस्मात्संपूजयेद्गुरुम् ।। ४३

कृमिकोटिभिराविष्टं दुर्गन्धमलमूत्रकम् ।
श्लेष्म-रक्त-त्वचामांसैर्नद्धं चैतद्वरानने ।। ४४

संसारवृक्षमारूढाः पतन्ति नरकार्णवे ।
येनोद्धरते विश्वं तस्मै श्रीगुरवे नमः ।। ४५

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुरेव परं ब्रह्म तस्मै श्रीगुरवे नमः ॥ ४६

अज्ञानतिमिरान्धस्य ज्ञानांजनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ४७

अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ४८

स्थावरं जंगमं व्याप्तं यत्किंचित्सचराचरम् ।
त्वंपदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ४९

चिन्मयव्यापितं सर्वं त्रैलोक्यं सचराचरम् ।
असित्वं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ५०

निमिषार्धार्ध-पादाद्वा यद्वाक्याद्वै विलोक्यते ।
स्वात्मानं स्थिरमाधत्ते तस्मै श्रीगुरवे नमः ॥ ५१

चैतन्यं शाश्वतं शान्तं व्योमातीतं निरंजनम् ।
नादबिन्दुकलातीतं तस्मै श्रीगुरवे नमः ॥ ५२

निर्गुणं निर्मलं शान्तं जंगमं स्थिरमेव च ।
व्याप्तं येन जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ५३

त्वं पिता त्वं च मे माता त्वं बन्धुस्त्वं च देवता ।
संसारभीति-भंगाय तस्मै श्री गुरवे नमः ॥ ५४

यत्सत्त्वेन जगत्सत्यं यत्प्रकाशेन भाति यत् ।
यदानन्देन नन्दन्ति तस्मै श्रीगुरवे नमः ॥ ५५

यस्मिन् स्थितमिदं सर्वं भाति यद्भानरूपतः ।
यत्प्रीत्या प्रियं पुत्रादि तस्मै श्रीगुरवे नमः ॥ ५६

येन चेतयता हीदं चित्तं चेतयते नरः ।
जाग्रत्स्वप्न-सुषुप्त्यादि तस्मै श्रीगुरवे नमः ।। ५७

यस्य ज्ञानमिदं विश्वं न दृश्यं भिन्नभेदतः ।
सदैकरूप-रूपाय तस्मै श्रीगुरवे नमः ।। ५८

यस्याज्ञातं मतं तस्य मतं यस्य न वेद सः ।
अनन्यभाव-भावाय तस्मै श्रीगुरवे नमः ।। ५९

यस्मै कारणरूपाय कार्यरूपेण भाति यत्।
कार्यकारण-रूपाय तस्मै श्रीगुरवे नमः ।। ६०

नानारूपमिदं विश्वं न केनाप्यस्ति भिन्नता।
कार्यकारणरूपाय तस्मै श्रीगुरवे नमः ।। ६१

ज्ञानशक्तिसमारूढ तत्त्वमालाविभूषिणे।
भुक्तिमुक्तिप्रदात्रे च तस्मै श्रीगुरवे नमः ।। ६२

अनेकजन्मसंप्राप्त-कर्मबन्ध-विदाहिने।
ज्ञानानलप्रभावेन तस्मै श्रीगुरवे नमः ।। ६३

शोषणं भवसिन्धोश्च दीपनं क्षरसंपदाम्।
गुरोः पादोदकं यस्य तस्मै श्रीगुरवे नमः ।। ६४

न गुरोरधिकं तत्त्वं न गुरोरधिकं तपः ।
न गुरोरधिकं ज्ञानं तस्मै श्रीगुरवे नमः ।। ६५

मन्नाथः श्रीजगन्नाथः मद्गुरुः श्रीजगद्गुरुः ।
ममात्मा सर्वभूतात्मा तस्मै श्रीगुरवे नमः ।। ६६

गुरुरादिरनादिश्च गुरुः परमदैवतम्।
गुरुमन्त्रसमो नास्ति तस्मै श्रीगुरवे नमः ।। ६७

एक एव परो बन्धुर्विवेके समुपस्थिते।
गुरुः सकलधर्मात्मा तस्मै श्रीगुरवे नमः ।। ६८

गुरुमध्ये स्थितं विश्वं विश्वमध्ये स्थितो गुरुः ।
गुरुर्विश्वं नमस्तेऽस्तु तस्मै श्रीगुरवे नमः ।। ६९

भवारण्य-प्रविष्टस्य दिङ्मोह-भ्रान्तचेतसः ।
येन सन्दर्शितः पन्थास्तस्मै श्रीगुरवे नमः ।। ७०

तापत्रयाग्नितप्ताना-मशान्त-प्राणिनां भुवि।
गुरुरेव परा गंगा तस्मै श्रीगुरवे नमः ।। ७१

अज्ञानेनाहिना ग्रस्ताः प्राणिनस्तान् चिकित्सकः ।
विद्यास्वरूपो भगवान् तस्मै श्रीगुरवे नमः ।। ७२

हेतवे जगतामेवं संसारार्णवसेतवे।
प्रभवे सर्वविद्यानां शंभवे गुरवे नमः ।। ७३

ध्यानमूलं गुरो-र्मूर्तिः पूजामूलं गुरोः पदम्।
मन्त्रमूलं गुरोर्वाक्यं मुक्तिमूलं गुरोः कृपा।। ७४

सप्तसागरपर्यन्तं तीर्थस्नानफलं यथा।
गुरुपादोदकबिन्दोः सहस्रांशेन तत्फलम्।। ७५

शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन।
लब्ध्वा कुलगुरुं सम्यक् गुरुमेव समाश्रयेत्।। ७६

मधुलुब्धो यथा भृंगः पुष्पात्पुष्पान्तरं व्रजेत्।
ज्ञानलुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं व्रजेत्।। ७७

वन्दे गुरुपदद्वन्द्वं वाङ्मनोतीतगोचरम्।
श्वेतरक्तप्रभाभिन्नं शिवशक्त्यात्मकं परम्।। ७८

गुकारं च गुणातीतं रुकारं रूपवर्जितम्।
गुणातीतमरूपं च यो दद्यात् स गुरुः स्मृतः ।। ७९

अत्रिनेत्रः शिवः साक्षात् द्विबाहुश्च हरिः स्मृतः ।
योऽचतुर्वदनो ब्रह्मा श्रीगुरुः कथितः प्रिये ।। ८०

अयं मयांजलिर्बद्धो दयासागरसिद्धये।
यदनुग्रहतो जन्तुश्चित्रसंसारमुक्तिभाक् ।। ८१

श्रीगुरोः परमं रूपं विवेकचक्षुरग्रतः ।
मन्दभाग्या न पश्यन्ति अन्धाः सूर्योदयं यथा ।। ८२

कुलानां कुलकोटीनां तारकस्तत्र तत्क्षणात्।
अतस्तं सद्गुरुं ज्ञात्वा त्रिकालमभिवादयेत् ।। ८३

श्रीनाथ-चरणद्वन्द्वं यस्यां दिशि विराजते।
तस्यां दिशि नमस्कुर्याद् भक्त्या प्रतिदिनं प्रिये ।। ८४

साष्टांगप्रणिपातेन ततो नित्यं गुरुं भजेत्।
भजनात्स्थैर्यमाप्नोति स्वस्वरूपमयो भवेत् ।। ८५

दोर्भ्यां पद्भ्यां च जानुभ्या-मुरसा शिरसा दृशा।
मनसा वचसा चेति प्रणामोऽष्टांग उच्यते ।। ८६

तस्मै दिशे सतत-मंजलिरेष नित्यं
प्रक्षिप्यतां मुखरितै-र्मधुरैः प्रसूनैः ।
जागर्ति यत्र भगवान् गुरु चक्रवर्ती
विश्वस्थिति-प्रलय-नाटक-नित्यसाक्षी ।। ८७

अभ्यस्तैः किमु दीर्घकाल विमलै-र्व्याधिप्रदै-र्दुष्करैः
प्राणायामशतैरनेक करणैर्दुःखात्मकैर्दुर्जयैः ।

यस्मिन्नभ्युदिते विनश्यति बली वायुः स्वयं तत्क्षणात्
प्राप्तुं तत्सहजस्वभाव-मनिशं सेवेत चैकं गुरुम्॥ ८८

ज्ञानं विना मुक्तिपदं लभ्यते गुरुभक्तितः।
गुरोः समानतो नान्यत्साधनं गुरुमार्गिणाम्॥ ८९

यस्मात्परतरं नास्ति नेति नेतीति वै श्रुतिः।
मनसा वचसा चैव सत्यमाराधयेद्गुरुम्॥ ९०

गुरोः कृपाप्रसादेन ब्रह्मविष्णुशिवादयः।
सामर्थ्यमभजन् सर्वे सृष्टिस्थित्यादि-कर्मणि॥ ९१

देवकिन्नरगन्धर्वाः पितृ-यक्षास्तु तुम्बुरुः।
मुनयोऽपि न जानन्ति गुरुशुश्रूषणे विधिम्॥ ९२

महाहंकार गर्वेण तपो-विद्या बलेन च।
भ्रमन्त्येतस्मिन् संसारे घटीयन्त्रं यथा पुनः॥ ९३

यज्ञिनोऽपि न मुक्ताः स्युः न मुक्ता योगिनस्तथा।
तापसा अपि नो मुक्ताः गुरुतत्वात्पराङ्मुखाः॥ ९४

न मुक्तास्तु गन्धर्वाः पितृयक्षास्तु चारणाः।
ऋषयः सिद्धदेवाद्या गुरुसेवापराङ्मुखाः॥ ९५

श्री प्रथमोऽध्यायः॥

॥ द्वितीयोऽध्यायः॥

श्रीमहादेव उवाच-

ध्यानं शृणु महादेवि सर्वानन्दप्रदायकम्।
सर्वसौख्यकरं चैव भुक्तिमुक्ति-प्रदायकम्॥ १

श्रीमत्परं ब्रह्म गुरुं स्मरामि श्रीमत्परं ब्रह्म गुरुं भजामि।
श्रीमत्परं ब्रह्म गुरुं वदामि श्रीमत्परं ब्रह्म गुरुं नमामि ।। २

ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
द्वन्द्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ।।३

हृदम्बुजे कर्णिकमध्यसंस्थे
सिंहासने संस्थितदिव्यमूर्तिम्।
ध्यायेद्गुरुं चन्द्रकलाप्रकाशं
सच्चित्सुखाभीष्टवरं ददानम्।। ४

श्वेतांबरं श्वेतविलेपपुष्पं
मुक्ताविभूषं मुदितं द्विनेत्रम्।
वामाङ्कपीठस्थितदिव्यशक्तिं
मन्दस्मितं पूर्णकृपानिधानम्।। ५

आनन्दमानन्दकरं प्रसन्नं ज्ञानस्वरूपं निजभावयुक्तम्।
योगीन्द्रमीड्यं भवरोगवैद्यं श्रीमद्गुरुं नित्यमहं नमामि ।। ६

वन्दे गुरूणां चरणारविन्दं सन्दर्शितस्वात्म-सुखांबुधीनाम्।
जनस्य येषां गुळिकायमानं संसारहालाहलमोहशान्त्यै ।। ७

यस्मिन्सृष्टि-स्थिति-ध्वंस-निग्रहानुग्रहात्मकम्।
कृत्यं पंचविधं शश्वत् भासते तं गुरुं भजेत्।। ८

पादाब्जे सर्वसंसार-दावकालानलं स्वके।
ब्रह्मरन्ध्रे स्थिताम्भोज-मध्यस्थं चन्द्रमण्डलम्।। ९

अकथादि-त्रिरेखाब्जे सहस्रदलमण्डले।
हंसपार्श्व-त्रिकोणे च स्मरेत्तन्मध्यगं गुरुम्।। १०

नित्यं शुद्धं निराभासं निराकारं निरंजनम्।
नित्यबोधं चिदानन्दं गुरुं ब्रह्म नमाम्यहम्॥ ११

सकलभुवनसृष्टिः कल्पिताशेषसृष्टिः
निखिलनिगमदृष्टिः सत्पदार्थैकसृष्टिः।
अतद्गुणपरमेष्ठिः सत्पदार्थैकदृष्टिः
भवगुणपरमेष्ठिर्मोक्षमार्गैकदृष्टिः॥ १२

सकलभुवन भंगस्थापनास्तंभयष्टिः
सकरुणरसवृष्टिस्तत्त्वमालासमष्टिः।
सकल समयसृष्टिः सच्चिदानन्द दृष्टिः
निवसतु मयि नित्यं श्रीगुरोर्दिव्यदृष्टिः॥ १३

न गुरोरधिकं न गुरोरधिकं न गुरोरधिकं न गुरोरधिकम्।
शिवशासनतः शिवशासनतः शिवशासनतः शिवशासनतः॥१४

इदमेव शिवं इदमेव शिवं इदमेव शिवं इदमेव शिवम्।
मम शासनतो मम शासनतो मम शासनतो मम शासनतः॥१५

विदितं विदितं विदितं विदितं विजयं विजयं विजयं विजयम्।
हरिशासनतो हरिशासनतो हरिशासनतो हरिशासनतः॥ १६

एवंविधं गुरुं ध्यात्वा ज्ञानमुत्पद्यते स्वयम्।
तथा गुरूपदेशेन मुक्तोऽहमिति भावयेत्॥ १७

गुरूपदेशितैर्मार्गैर्मनःशुद्धिं तु कारयेत्।
अनित्यं खण्डयेत्सर्वं यत्किंचिदात्मगोचरम्॥ १८

ज्ञेयं सर्वं प्रतीतं च ज्ञानं च मन उच्यते।
ज्ञानं ज्ञेयं समं कुर्यान्नान्यः पन्था द्वितीयकः॥ १९

किमत्र बहुनोक्तेन शास्त्रकोटिशतैरपि।
दुर्लभा चित्तविश्रान्तिर्विना गुरुकृपां पराम्॥ २०

करुणाखड्गपातेन छित्वा पाशाष्टकं शिशोः।
सम्यगानन्दजनकः सद्गुरुः सोऽभिधीयते॥ २१

एवं श्रुत्वा महादेवि गुरुनिन्दां करोति यः।
स याति नरकान् घोरान् यावच्चन्द्रदिवाकरौ॥ २२

यावत्कल्पान्तको देहस्तावद्देवि गुरुं स्मरेत्।
गुरुलोभो(पो) न कर्तव्यः स्वच्छन्दो यदि वा भवेत्॥ २३

हुंकारेण न वक्तव्यं प्राज्ञशिष्यैः कदाचन।
गुरोरग्रे न वक्तव्यं असत्यं तु कदाचन॥ २४

गुरुं त्वंकृत्य हुंकृत्य गुरुसान्निध्यभाषणः।
अरण्ये निर्जले देशे संभवेद्ब्रह्मराक्षसः॥ २५

(अद्वैतं भावयेन्नित्यं सर्वावस्थासु सर्वदा।
कदाचिदपि नो कुर्यादद्वैतं गुरु सन्निधौ॥

दृश्यविस्मृतिपर्यन्तं कुर्याद्गुरुपदार्चनम्।
तादृशस्यैव कैवल्यं न च तद्व्यतिरेकिणः॥

अपि संपूर्ण तत्वज्ञो गुरुत्यागी भवेद्यदा।
भवत्येव हि तस्यान्तकाले विक्षेपमुत्कटम्॥ )

गुरुकार्यं न लंघेत नापृष्ट्वा कार्यमाचरेत्।
न ह्युत्तिष्ठेद्दिशेऽनत्वा गुरुसद्भाव - शोभितः॥ २६

न गुरोराश्रमे कुर्याद्दुष्पानं परिसर्पणम्।
दीक्षाव्याख्याप्रभुत्वादि गुरोराज्ञां न कारयेत्॥ २७

नोपाश्रमं न पर्यंकं न च पादप्रसारणम्।
नांगभंगादिकं कुर्यान्न लीलामपरामपि ॥ २८

गुरूणां सदसद्वापि यदुक्तं तन्न लंघयेत्।
कुर्वन्नाज्ञां दिवारात्रौ दासवन्निवसेद्गुरौ ॥ २९

अदत्तं न गुरोर्द्रव्यं उपभुंजीत कर्हिचित्।
दत्तं च रङ्कवद्ग्राह्यं प्राणोऽप्येतेन लभ्यते ॥ ३०

पादुकासन - शय्यादि गुरूणां यदभीप्मितम्।
नमस्कुर्वीत तत्सर्वं पादाभ्यां न स्पृशेत् कचित् ॥ ३१

गच्छतः पृष्ठतो गच्छेद् गुरुच्छायां न लंघयेत्।
नोल्बणं धारयेद्वेषं नालंकारांस्तदोल्बणान् ॥ ३२

गुरुनिन्दाकरं दृष्ट्वा धावयेदथ वासयेत्।
स्थानं वा तत्परित्याज्यं जिह्वाच्छेदाक्षमो यदि ॥ ३३

नोच्छिष्टं कस्यचिद्देयं गुरोराज्ञां न च त्यजेत्।
कृत्स्नमुच्छिष्टमादाय हविर्वद्भक्षयेत्स्वयम् ॥ ३४

नानृतं नाप्रियं चैव न गर्वं नापि वा बहु।
न नियोगपरं ब्रूयाद् गुरोराज्ञां विभावयेत् ॥ ३५

प्रभो देव कुलेशान स्वामिन् राजन् कुलेश्वर।
इति संबोधनैर्भीतः गु रु भावेन सर्वदा ॥ ३६

मुनिभिः पन्नगैर्वापि सुरैर्वा चापि तोयदि।
कालमृत्युभयाद्वापि गुरुः सन्त्राति पार्वति ॥ ३७

अशक्ता हि सुराद्याश्च ह्यशक्ता मुनयस्तथा।
गुरुशापोपपन्नस्य रक्षणाय च कुत्रचित् ॥ ३८

मन्त्रराजमिदं देवि गुरुरित्यक्षर द्वयम्।
स्मृति-वेदार्थवाक्यानां गुरुः साक्षात्परं पदम्।। ३९

सत्कार मानपूजार्थं दण्डकाषायधारणः।
स संन्यासी न वक्तव्यः सन्यासी ज्ञानतत्परः।। ४०

विजानन्ति महावाक्यं गुरोश्चरणसेवया।
ते वै सन्यासिनः प्रोक्ता इतरे वेषधारिणः।। ४१

नित्यं ब्रह्म निराकारं निर्गुणं बोधयेत्परम्।
भासयन् ब्रह्मभावं च दीपो दीपान्तरं यथा।। ४२

गुरुप्रसादतः स्वात्मन्यात्माराम-निरीक्षणात्।
समता मुक्तिमार्गेण स्वात्मज्ञानं प्रवर्तते।। ४३

आब्रह्मस्तम्बपर्यन्तं परमात्मस्वरूपकम्।
स्थावरं जंगमं चैव प्रणमामि जगन्मयम्।। ४४

वन्देऽहं सच्चिदानन्दं भावातीतं जगद्गुरुम्।
नित्यं पूर्णं निराकारं निर्गुणं स्वात्मसंस्थितम्।। ४५

परात्परतरं ध्यायेन्नित्यमानन्दकारकम्।
हृदयाकाशमध्यस्थं शुद्धस्फटिकसन्निभम्।। ४६

स्फटिके स्फाटिकं रूपं दर्पणे दर्पणो यथा।
तदात्मनि चिदाकारमानन्दं सोहमित्युत।। ४७

अंगुष्ठमात्रं पुरुषं ध्यायेच्च चिन्मयं हृदि।
तत्र स्फुरति यो भावः शृणु तत्कथयामि ते।। ४८

अजोऽहममरोऽहं च अनादिनिधनो ह्यहम्।
अविकारश्चिदानन्दो ह्यणीयान्महतो महान्।। ४९

अपूर्वमपरं नित्यं स्वयं ज्योतिर्निरामयम्।
विरजं परमाकाशं ध्रुवमानन्दमव्ययम्॥ ५०

अगोचरं तथाऽगम्यं नामरूपविवर्जितम्।
निःशब्दं तु विजानीयात्स्वभावाद्ब्रह्म पार्वति॥ ५१

यथा गन्धस्वभावत्वं कर्पूरकुसुमादिषु।
शीतोष्णत्वस्वभावत्वं तथा ब्रह्मणि शाश्वतम्॥ ५२

यथा निजस्वभावेन कुण्डलकटकादयः।
सुवर्णत्वेन तिष्ठन्ति तथाऽहं ब्रह्म शाश्वतम्॥ ५३

स्वयं तथाविधो भूत्वा स्थातव्यं यत्रकुत्रचित्।
कीटो भृंग इव ध्यानाद्यथा भवति तादृशः॥ ५४

गुरुध्यानं तथा कृत्वा स्वयं ब्रह्ममयो भवेत्।
पिण्डे पदे तथा रूपे मुक्तास्ते नात्र संशयः॥ ५५

पार्वत्युवाच-

पिण्डं किं तु महादेव पदं किं समुदाहृतम्।
रूपातीतं च किं रूपं एतदाख्याहि शंकर॥ ५६

श्रीमहादेव उवाच-

पिण्डं कुण्डलिनी शक्तिः पदं हंसमुदाहृतम्।
रूपं बिन्दुरिति ज्ञेयं रूपातीतं निरंजनम्॥ ५७

पिण्डे मुक्ताः पदे मुक्ता रूपे मुक्ता वरानने।
रूपातीतेषु ये मुक्तास्ते मुक्ता नात्र संशयः॥ ५८

गुरोर्ध्यानेनैव नित्यं देही ब्रह्ममयो भवेत्।
स्थितश्च यत्र कुत्रापि मुक्तोऽसौ नात्र संशयः॥ ५९

ज्ञानं वैराग्यमैश्वर्यं यशः श्रीः स्वमुदाहृतम्।
(ज्ञानं स्वानुभवः शान्तिर्वैराग्यं वक्तृता धृतिः।)
षड्गुणैश्वर्ययुक्तश्च भगवान् श्रीगुरुः प्रिये ॥ ६०

गुरुः शिवो गुरुर्देवो गुरुर्बन्धुः शरीरिणाम्।
गुरुरात्मा गुरुर्जीवो गुरोरन्यन्न विद्यते ॥ ६१

एकाकी निःस्पृहः शान्तश्चिन्तासूयादिवर्जितः।
बाल्यभावेन यो भाति ब्रह्मज्ञानी स उच्यते ॥ ६२

न सुखं वेद शास्त्रेषु न सुखं मन्त्रयन्त्रके।
गुरोः प्रसादादन्यत्र सुखं नास्ति महीतले ॥ ६३

चार्वाक वैष्णवमते सुखं प्राभाकरे न हि।
गुरोः पादान्तिके यद्वत्सुखं वेदान्तसम्मितम् ॥ ६४

न तत्सुखं सुरेन्द्रस्य न सुखं चक्रवर्तिनाम्।
यत्सुखं वीतरागस्य मुनेरेकान्तवासिनः ॥ ६५

रसं ब्रह्म पिबेद्यश्च तृप्तो यः परमात्मनि।
इन्द्रं च मन्यते रंकं नृपाणां तत्र का कथा ॥ ६६

एक एवाद्वितीयोऽहं गुरुवाक्येन निश्चितः।
एवमभ्यस्यता नित्यं न सेव्यं वै वनान्तरम् ॥ ६७

अभ्यासान्निमिषेणैव समाधिमधिगच्छति।
आजन्मजनितं पापं तत्क्षणादेव नश्यति ॥ ६८

किमावाहनमव्यक्ते व्यापके किं विसर्जनम्।
अमूर्तौ च कथं पूजा कथं ध्यानं निरामये ॥ ६९

गुरुर्विष्णुः सत्त्वमयो राजसश्चतुराननः।
तामसो रुद्ररूपेण सृजत्यवति हन्ति च ॥ ७०

स्वयं ब्रह्ममयो भूत्वा तत्परं चावलोकयेत्।
परात्परतरं नान्यत्सर्वगतं निरामयम्॥ ७१

तस्यावलोकनं प्राप्य सर्वसंगविवर्जितम्।
एकाकी निःस्पृहः शान्तः स्थातव्यं तत्प्रसादतः॥ ७२

लब्धं वाथ न लब्धं वा स्वल्पं वा बहुलं तथा।
निष्कामेनैव भोक्तव्यं सदा सन्तुष्टमानसः॥ ७३

सर्वज्ञपदमित्याहुर्देही सर्वमयो भुवि।
सदानन्दः सदा शान्तो रमते यत्रकुत्रचित्॥ ७४

यत्रैव तिष्ठते सोऽपि स देशः पुण्यभाजनः।
मुक्तस्य लक्षणं देवि तवाग्रे कथितं मया॥ ७५

उपदेशस्त्वयं देवि गुरुमार्गेण मुक्तिदः।
गुरुभक्तिस्तथात्यन्ता कर्तव्या वै मनीषिभिः॥ ७६

नित्ययुक्ताश्रयः सर्वो वेदकृत् सर्ववेदकृत्।
स्वपरज्ञानदाता च तं वन्दे गुरुमीश्वरम्॥ ७७

यद्यप्यधीता निगमाः षडंगा आगमाः प्रिये।
अध्यात्मादीनि शास्त्राणि ज्ञानं नास्ति गुरुं विना॥ ७८

(शिवपूजारतो वापि विष्णुपूजारतोऽथवा।
गुरुतत्वविहीनश्चेत्तत्सर्वं व्यर्थमेव हि॥

शिवस्वरूपमज्ञात्वा शिवपूजा कृता यदि।
सा पूजा नाममात्रं स्याच्चित्रदीप इव प्रिये॥
सर्वं स्यात्सफलं कर्म गुरुदीक्षाप्रभावतः।
गुरुलाभात्सर्वलाभो गुरुहीनस्तु बालिशः॥

गुरुहीनः पशुः कीटः पतङ्गो वक्तुमर्हति ।
शिवरूपं स्वरूपं च न नाति यतः स्वयम् ।।

तस्मात्सर्वप्रयत्नेन सर्वसङ्ग विवर्जितः ।
विहाय शास्त्रजालानि गुरुमेव समाश्रयेत् ।।)

निरस्त-सर्वसन्देह एकीकृत्य सुदर्शनम् ।
रहस्यं यो दर्शयति भजामि गुरुमीश्वरम् ।। ७९

ज्ञानहीनो गुरुस्त्याज्यो मिथ्यावादी विडंबकः ।
स्वविश्रान्तिं न जानाति परशान्तिं करोति किम् ।। ८०

शिलायाः किं परं ज्ञानं शिलासंगः प्रतारणे ।
स्वयं तर्तुं न जानाति परं निस्तारयेत् कथम् ।। ८१

न वन्दनीयास्ते कष्टं दर्शनाद् भ्रान्तिकारकाः ।
वर्जयेत्तान् गुरून् दूरे धीरस्य तु समाश्रयेत् ।। ८२

पाखण्डिनः पापरता नास्तिका भेदबुद्धयः ।
स्त्रीलम्पटा दुराचाराः कृतघ्ना बकवृत्तयः ।। ८३

कर्मभ्रष्टा क्षमानष्टा निन्द्यतर्कैश्च वादिनः ।
कामिनः क्रोधिनश्चैव हिंसाश्चण्डाः शठास्तथा ।। ८४

ज्ञानलुब्धा न कर्तव्या महापापास्तथा प्रिये ।
एभ्यो भिन्नो गुरुः सेव्य एकभक्त्या विचार्य च ।। ८५

शिष्यादन्यत्र देवेशि न वदेद्यस्य कस्यचित् ।
नराणां च फलप्राप्तौ भक्तिरेव हि कारणम् ।। ८६

गूढो दृढश्च प्रीतश्च मौनेन सुसमाहितः ।
सकृत्कामगतो वापि पंचधा गुरुरीरितः ।। ८७

सर्वं गुरुमुखाल्लब्धं सफलं पापनाशनम्।
यद्यदात्महितं वस्तु तत्तद्द्रव्यं न वंचयेत्।। ८८

गुरुदेवार्पणं वस्तु तेन तुष्टोऽस्मि सुव्रते।
श्रीगुरोः पादुकां मुद्रां मूलमन्त्रं च गोपयेत्।। ८९

पार्वत्युवाच-

नतास्मि ते नाथ पदारविन्दं बुद्धीन्द्रियप्राणमनोवचोभिः।
यच्चिन्त्यते भावित आत्मयुक्तौ मुमुक्षुभिः कर्ममयोपशान्तये।।

श्रीमहादेव उवाच-

अनेन यद्भवेत्कार्यं तद्वदामि तव प्रिये।
लोकोपकारकं देवि लौकिकं तु विवर्जयेत्।। ९१

लौकिकाद्धर्मतो याति ज्ञानहीनो भवार्णवे।
ज्ञानभावे च यत्सर्वं कर्म निष्कर्म शाम्यति।। ९२

इमां तु भक्तिभावेन पठन् वै शृणुयादपि।
लिखित्वा यत्प्रदानेन तत्सर्वं फलमश्नुते।। ९३

गुरुगीतामिमां देवि हृदि नित्यं विभावय।
महाव्याधिगतैर्दुःखैः सर्वदा प्रजपन्मुदा।। ९४

गुरुगीताक्षरैकैकं मन्त्रराजमिदं प्रिये।
अन्ये च विविधा मन्त्राः कलां नार्हन्ति षोडशीम्।। ९५

अनन्तफलमाप्नोति गुरुगीताजपेन तु।
सर्वपापहरा देवि सर्वदारिद्र्यनाशिनी।। ९६

अकालमृत्युहरा चैव सर्वसंकटनाशिनी।
यक्षराक्षसभूतादिचोरव्याघ्रविघातिनी।। ९७

सर्वोपद्रव कुष्ठादि दुष्टदोषनिवारिणी ।
यत्फलं गुरुसान्निध्यात्तत्फलं पठनाद्भवेत् ।। ९८

महाव्याधिहरा सर्व विभूतेः सिद्धिदा भवेत् ।
अथवा मोहने वश्ये स्वयमेव जपेत्सदा ।। ९९

कुशदूर्वासने देवि ह्यासने शुभ्रकंबले ।
उपविश्य ततो देवि जपेदेकाग्रमानसः ।। १००

शुक्लं सर्वत्र वै प्रोक्तं वश्ये रक्तासनं प्रिये ।
पद्मासने जपेन्नित्यं शान्ति वश्यकरं परम् ।। १०१

वस्त्रासने च दारिद्र्यं पाषाणे रोगसम्भवः ।
मेदिन्यां दुःखमाप्नोति काष्ठे भवति निष्फलम् ।। १०२

कृष्णाजिने ध्यानसिद्धिर्मोक्षश्रीर्व्याघ्रचर्मणि ।
कुशासने ज्ञानसिद्धिः सर्वसिद्धिस्तु कम्बले ।। १०३

आग्नेय्यां कर्षणं चैव वायव्यां शत्रुनाशनम् ।
नैर्ऋत्यां दर्शनं चैव ईशान्यां ज्ञानमेव च ।। १०४

उदङ्मुखः शान्तिजाप्ये वश्ये पूर्वमुखस्तथा ।
याम्ये तु मारणं प्रोक्तं पश्चिमे च धनागमः ।। १०५

मोहनं सर्वभूतानां बन्धमोक्षकरं परम् ।
देवराज्ञां प्रियकरं राजानं वशमानयेत् ।। १०६

मुखस्तंभकरं चैव गुणानां च विवर्धनम् ।
दुष्कर्मनाशनं चैव तथा सत्कर्मसिद्धिदम् ।। १०७

असिद्धं साधयेत्कार्यं नवग्रहभयापहम् ।
दुःस्वप्ननाशनं चैव सुस्वप्नफलदायकम् ।। १०८

सर्वशान्तिकरं नित्यं तथा वन्ध्यासुपुत्रदम्।
अवैधव्यकरं स्त्रीणां सौभाग्यस्य विवर्धनम्।। १०९

आयुरारोग्यमैश्वर्यं पुत्रपौत्रप्रवर्धनम्।
निष्कामजापी विधवा पठेन्मोक्षमवाप्नुयात्।। ११०

अवैधव्यं सकामा तु लभते चान्यजन्मनि।
सर्वदुःखमयं विघ्नं नाशयेत्तापकारकम्।। १११

सर्वपापप्रशमनं धर्मकामार्थमोक्षदम्।
यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितम्।। ११२

काम्यानां कामधेनुर्वै कल्पिते कल्पपादपः।
चिन्तामणिश्चिन्तितस्य सर्वमंगलकारकम्।। ११३

लिखित्वा पूजयेद्यस्तु मोक्षश्रियमवाप्नुयात्।
गुरुभक्तिर्विशेषेण जायते हृदि सर्वदा।। ११४

जपन्ति शाक्ताः सौराश्च गाणपत्याश्च वैष्णवाः।
शैवाः पाशुपताः सर्वे सत्यं सत्यं न संशयः।। ११५

इति द्वितीयोऽध्यायः



## ।। तृतीयोऽध्यायः ।।

श्रीमहादेव उवाच-

अथ काम्यजपस्थानं कथयामि वरानने।
सागरान्ते सरित्तीरे तीर्थे हरिहरालये।। १

शक्तिदेवालये गोष्ठे सर्वदेवालये शुभे।
वटस्य धात्र्या मूले वा मठे वृन्दावने तथा।। २

पवित्रे निर्मले देशे नित्यानुष्ठानतोऽपि वा।
निर्वेदनेन मौनेन जपमेतत् समारभेत्॥ ३

जाप्येन जयमाप्नोति जपसिद्धिं फलं तथा।
हीनं कर्म त्यजेत् सर्वं गर्हितस्थानमेव च॥ ४

श्मशाने बिल्वमूले वा वटमूलान्तिके तथा।
सिद्ध्यन्ति कानके मूले चूतवृक्षस्य सन्निधौ॥ ५

पीतासनं मोहने तु ह्यसितं चाभिचारके।
ज्ञेयं शुक्लं च शान्त्यर्थं वश्ये रक्तं प्रकीर्तितम्॥ ६

जपं हीनासनं कुर्वन् हीनकर्मफलप्रदम्।
गुरुगीतां प्रयाणे वा संग्रामे रिपुसंकटे॥ ७

जपन् जयमवाप्नोति मरणे मुक्तिदायिका।
सर्वकर्माणि सिद्ध्यन्ति गुरुपुत्रे न संशयः॥ ८

गुरुमन्त्रो मुखे यस्य तस्य सिद्ध्यन्ति नान्यथा।
दीक्षया सर्वकर्माणि सिद्ध्यन्ति गुरुपुत्रके॥ ९

भवमूलविनाशाय चाष्टपाशनिवृत्तये।
गुरुगीतांभसि स्नानं तत्त्वज्ञः कुरुते सदा॥ १०

स एव सद्गुरुस्साक्षात् सदसद्ब्रह्मवित्तमः।
तस्य स्थानानि सर्वाणि पवित्राणि न संशयः॥ ११

सर्वशुद्धः पवित्रोऽसौ स्वभावाद्यत्र तिष्ठति।
तत्र देवगणाः सर्वे क्षेत्रपीठे चरन्ति च॥ १२

आसनस्थाः शयाना वा गच्छन्तस्तिष्ठन्तोऽपि वा।
अश्वारूढा गजारूढाः सुषुप्ता जाग्रतोऽपि वा॥ १३

शुचिभूता ज्ञानवन्तो गुरुगीतां भजन्ति ये।
तेषां दर्शनसंस्पर्शात्पुनर्जन्म न विद्यते ॥ १४

समुद्रे वै यथा तोयं क्षीरे क्षीरे जले जलम्।
भिन्नकुम्भे यथाकाशं तथात्मा परमात्मनि ॥ १५

तथैव ज्ञानवान् जीवः परमात्मनि सर्वदा।
ऐक्येन रमते ज्ञानी यत्र कुत्र दिवानिशम् ॥ १६

एवंविधो महायुक्तः सर्वत्र वर्तते सदा।
तस्मात्सर्वप्रकारेण गुरुभक्तिं समाचरेत् ॥ १७

गुरुसन्तोषणादेव मुक्तो भवति पार्वति।
अणिमादिषु भोक्तृत्वे कृपया देवि जायते ॥ १८

साम्येन रमते ज्ञानी दिवा वा यदि वा निशि।
एवंविधो महामौनी त्रैलोक्यसमतां व्रजेत् ॥ १९

अथ संसारिणः सर्वे गुरुगीताजपेन तु।
सर्वान् कामांस्तु भुंजन्ति त्रिसत्यं मम भाषितम् ॥ २०

सत्यं सत्यं पुनः सत्यं धर्मसांख्यं मयोदितम्।
गुरुगीतासमं स्तोत्रं नास्ति तत्त्वं गुरोः परम् ॥ २१

गुरुर्देवो गुरुर्धर्मो गुरौ निष्ठा परं तपः।
गुरोः परतरं नास्ति त्रिवारं कथयामि ते ॥ २२

धन्या माता पिता धन्यो गोत्रं धन्यं कुलोद्भवः।
धन्या च वसुधा देवी यत्र स्याद्गुरुभक्तता ॥ २३

आकल्पजन्मकोटीनां यज्ञव्रततपःक्रियाः।
ताः सर्वाः सफला देवि गुरुसन्तोषमात्रतः ॥ २४

शरीरमिन्द्रियं प्राणमर्थस्वजनबन्धुता।
मातृकुलं पितृकुलं गुरुरेव न संशयः ।। २५

मन्दभाग्या ह्यशक्ताश्च ये जना नानुमन्यते।
गुरुसेवासु विमुखाः पच्यन्ते नरकेऽशुचौ ।। २६

विद्या धनं बलं चैव तेषां भाग्यं निरर्थकम्।
येषां गुरुकृपा नास्त्यधोगच्छन्ति पार्वति ।। २७

ब्रह्मा विष्णुश्च रुद्रश्च देवताः पितृकिन्नराः ।
सिद्धचारण यक्षाश्चान्ये च मुनयो जनाः ।। २८

गुरुभावः परं तीर्थ मन्यतीर्थंनिरर्थकम्।
सर्वतीर्थमयं देवि श्रीगुरोश्चरणाम्बुजम्।। २९

कन्याभोगरता मन्दाः स्वकान्तायाः पराङ्मुखाः।
अतः परं मया देवि कथितं न मम प्रिये ।। ३०

इदं रहस्यमस्पष्टं वक्तव्यं च वरानने।
सुगोप्यं च तवाग्रे तु ममात्मप्रीतये सति ।। ३१

स्वामिमुख्य गणेशाद्यान् वैष्णवादींश्च पार्वति।
न वक्तव्यं महामाये पादस्पर्शं कुरुष्व मे ।। ३२

अभक्ते वंचके धूर्ते पाषण्डे नास्तिकादिषु।
मनसापि न वक्तव्या गुरुगीता कदाचन ।। ३३

गुरवो बहवः सन्ति शिष्यवित्तापहारकाः ।
तमेकं दुर्लभं मन्ये शिष्य हृत्तापहारकम्।। ३४

चातुर्यवान् विवेकी च अध्यात्मज्ञानवान् शुचिः।
मानसं निर्मलं यस्य गुरुत्वं तस्य शोभते ।। ३५

गुरवो निर्मलाः शान्ताः साधवो मितभाषिणः ।
कामक्रोधविनिर्मुक्ताः सदाचारा जितेन्द्रियाः ।। ३६

(सूचकादिप्रभेदेन गुरवो बहुधा स्मृताः ।
स्वयं सम्यक् परीक्ष्याथ तत्त्वनिष्ठं भजेत्सुधीः ।।

वर्णजालमिदं तद्वद्बाह्यशास्त्रं तु लौकिकम् ।
यस्मिन् देवि समभ्यस्तं स गुरुः सूचकः स्मृतः ।।

वर्णाश्रमोचितां विद्यां धर्माधर्मविधायिनीम् ।
प्रवक्तारं गुरुं विद्धि वाचकं त्विति पार्वति ।।

पञ्चाक्षर्यादिमन्त्राणामुपदेष्टा तु पार्वति ।
स गुरुर्बोधको भूयादुभयोरयमुत्तमः ।।

मोहमारणवश्यादि तुच्छमन्त्रोपदर्शिनम् ।
निषिद्धगुरुरित्याहुः पण्डितास्तत्त्वदर्शिनः

अनित्यमिति निर्दिश्य संसारं सङ्कटालयम् ।
वैराग्यपददर्शी यः स गुरुर्विहितः प्रिये ।।

तत्त्वमस्यादिवाक्यानामुपदेष्टा तु पार्वति ।
कारणाख्यो गुरुः प्रोक्तो भवरोगनिवारकः ।।

सर्वसन्देहसन्दोहनिर्मूलनविचक्षणः ।
जन्ममृत्युभयघ्नो यः स गुरुः परमो मतः ।।

बहुजन्मकृतात् पुण्याल्लभ्यतेऽसौ महागुरुः ।
लब्ध्वाऽमुं न पुनर्याति शिष्यः संसारबन्धनम् ।।

एवं बहुविधा लोके गुरवः सन्ति पार्वति ।
तेषु सर्वप्रयत्नेन सेव्यो हि परमो गुरुः ।।

निषिद्धगुरुशिष्यस्तु दुष्टसङ्कल्पदूषितः ।
ब्रह्मप्रलयपर्यन्तं न पुनर्याति मर्त्यताम् ॥

एवं श्रुत्वा महादेवी महादेववचस्तथा ।
अत्यन्तविह्वलमनाः शङ्करं परिपृच्छति ॥

नमस्ते देवदेवात्र श्रोतव्यं किञ्चिदस्ति मे ।
श्रुत्वा त्वद्वाक्यमधुना भृशं स्याद्विह्वलं मनः ॥
स्वयं मूढा मृत्युभीताः सुकृताद्विरतिं गताः ।
दैवान्निषिद्धगुरुगा यदि तेषां तु का गतिः ॥

श्री महादेव उवाच

शृणु तत्त्वमिदं देवि यदा स्याद्विरतो नरः ।
तदाऽसावधिकारीति प्रोच्यते श्रुतिमस्तकैः ॥

अखण्डैकरसं ब्रह्म नित्यमुक्तं निरामयम् ।
स्वस्मिन् सन्दर्शितं येन स भवेदस्य देशिकः ॥

जलानां सागरो राजा यथा भवति पार्वति ।
गुरूणां तत्र सर्वेषां राजायं परमो गुरुः ॥

मोहादिरहितः शान्तो नित्यतृप्तो निराश्रयः ।
तृणीकृतब्रह्मविष्णुवैभवः परमो गुरुः ॥

सर्वकालविदेशेषु स्वतन्त्रो निश्चलस्सुखी ।
अखण्डैकरसास्वादतृप्तो हि परमो गुरुः ॥

द्वैताद्वैतविनिर्मुक्तः स्वानुभूतिप्रकाशवान् ।
अज्ञानान्धतमश्छेत्ता सर्वज्ञः परमो गुरुः ॥

यस्य दर्शनमात्रेण मनसः स्यात् प्रसन्नता ।
स्वयं भूयात् धृतिश्शान्तिः स भवेत् परमो गुरुः ॥

सिद्धिजालं समालोक्य योगीनां मन्त्रवादिनाम्।
तुच्छाकारमनोवृत्तिर्यस्यासौ परमो गुरुः ॥

स्वशरीरं शवं पश्यन् तथा स्वात्मानमद्वयम्।
यः स्त्रीकनकमोहघ्नः स भवेत् परमो गुरुः ॥

मौनी वाग्मीति तत्त्वज्ञो द्विधाऽ भूच्छृणु पार्वति।
न कश्चिन्मौनिनां लोभो लोकेऽस्मिन्भवति प्रिये॥

वाग्मी तूत्कटसंसारसागरोत्तारणक्षमः।
यतोऽसौ संशयच्छेत्ता शास्त्रयुक्त्यनुभूतिभिः ॥

गुरुनामजपाद्देवि बहुजन्मार्जितान्यपि।
पापानि विलयं यान्ति नास्ति सन्देहमण्वपि॥

श्रीगुरोस्सदृशं दैवं श्रीगुरोस्सदृशः पिता।
गुरुध्यान समं कर्म नास्ति नास्ति महीतले॥

कुलं धनं बलं शास्त्रं बान्धवास्सोदरा इमे।
मरणे नोपयुज्यन्ते गुरुरेको हि तारकः ॥

कुलमेव पवित्रं स्यात् सत्यं स्वगुरुसेवया।
तृप्ताः स्युस्सकला देवा ब्रह्माद्या गुरुतर्पणात्॥

गुरुरेको हि जानाति स्वरूपं दैवमव्ययम्।
तज्ज्ञानं यत्प्रसादेन नान्यथा शास्त्रकोटिभिः ॥

स्वरूपज्ञानशून्येन कृतमप्यकृतं भवेत्।
तपोजपादिकं देवि सकलं बालजल्पवत्॥

शिवं केचिद्धरिं केचिद्विधिं केचित्तु केचन।
शक्तिं दैवमिति ज्ञात्वा विवदन्ति वृथा नराः ॥

न जानन्ति परं तत्त्वं गुरुदीक्षापराङ्मुखाः ।
भ्रान्ताः पशुसमा ह्येते स्वपरिज्ञानवर्जिताः ।।

तस्मात्कैवल्यसिद्ध्यर्थं गुरुमेव भजेत्प्रिये ।
गुरुं विना न जानन्ति मूढास्तत्परमं पदम् ।।

भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते सर्वकर्माणि गुरोः करुणया शिवे ।।)

कृताया गुरुभक्तेस्तु वेदशास्त्रानुसारतः ।
मुच्यते पातकाद् घोराद् गुरुभक्तो विशेषतः ।। ३७

दुस्संगं च परित्यज्य पापकर्म परित्यजेत् ।
चित्तचिह्नमिदं यस्य तस्य दीक्षा विधीयते ।। ३८

चित्तत्यागनियुक्तश्च क्रोधगर्वविवर्जितः ।
द्वैतभावपरित्यागी तस्य दीक्षा विधीयते ।। ३९

एतल्लक्षणयुक्तत्वं सर्वभूतहिते रतम् ।
निर्मलं जीवितं यस्य तस्य दीक्षा विधीयते ।। ४०

क्रियया चान्वितं पूर्वं दीक्षाजालं निरूपितम् ।
मन्त्रदीक्षाभिधं सांगोपांगं सर्वं शिवोदितम् ।। ४१

क्रियया स्याद्विरहितां गुरुसायुज्यदायिनीम् ।
गुरुदीक्षां विना को वा गुरोस्त्वाचारपालकः ।। ४२

शक्तो न चापि शक्तो वा दैशिकांघ्रिसमाश्रयः ।
तस्य जन्मास्ति सफलं भोगमोक्षफलप्रदम् ।। ४३

अत्यन्तचित्तपक्वस्य श्रद्धाभक्तियुतस्य च ।
प्रवक्तव्यमिदं देवि मयात्मप्रीतये सदा ।। ४४

(सत्कर्मपरिपाकाच्च चित्तशुद्धिश्च धीमता।
साधकस्यैव वक्तव्या गुरुगीता प्रयत्नतः ।।

नास्तिकाय कृतघ्नाय दांभिकाय शठाय च।
अभक्ताय विभक्ताय न वाच्येयं कदाचन ।।

स्त्रीलोलुपाय मूर्खाय कामोपहृतचेतसे।
निन्दकाय न वक्तव्या गुरुगीता स्वभावतः ।।

सर्वपापप्रशमनं सर्वोपद्रववारकम्।
जन्ममृत्युहरं देवि गीताशास्त्रमिदं शिवे ।।

श्रुतिसारमिदं देवि सर्वमुक्तं समासतः।
नान्यथा सद्गतिः पुंसां विना गुरुपदं शिवे ।।

बहुजन्मकृतात्पापादयमर्थो न रोचते।
जन्मबन्धनिवृत्त्यर्थं गुरुमेव भजेत्सदा ।।

अहमेव जगत्सर्वं अहमेव परं पदम्।
एतज्ज्ञानं यतो भूयात्तं गुरुं प्रणमाम्यहम् ।।

अलं विकल्पैरहमेव केवलं मयि स्थितं विश्वमिदं चराचरम्।
इदं रहस्यं मम दर्शितं पुरा स वन्दनीयो गुरुरेव केवलम् ।।

यस्यान्तं नादिमध्यं न हि करचरणं नाम गोत्रं न सूत्रम्
नो जातिर्नैव वर्णो न भवति पुरुषो नो नपुंसो न च स्त्री।

नाकारं नो विकारं न हि जनिमरणं नास्ति पुण्यं न पापम्
नोऽतत्त्वं तत्त्वमेकं सहजसमरसं सद्गुरुं तन्नमामि ।।

नित्याय सत्याय चिदात्मकाय नव्याय भव्याय परात्पराय।
शुद्धाय बुद्धाय निरञ्जनाय नमोऽस्तु नित्यं गुरुशेखराय ।।)

सच्चिदानन्दरूपाय व्यापिने परमात्मने।
नमः श्रीगुरुनाथाय प्रकाशानन्दमूर्तये ।। ४५

सत्यानन्दस्वरूपाय बोधैकसुखकारिणे।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ।। ४६

नमस्ते नाथ भगवन् शिवाय गुरुरूपिणे।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ।। ४७

नवाय नवरूपाय परमार्थैकरूपिणे।
सर्वाज्ञानतमोभेद-भानवे चिद्घनाय ते ।। ४८

स्वतन्त्राय दयाक्लृप्त-विग्रहाय शिवात्मने।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ।। ४९

विवेकिनां विवेकाय विमर्शाय विमर्शिनाम्।
प्रकाशिनां प्रकाशाय ज्ञानिनां ज्ञानरूपिणे ।। ५०

पुरस्तात्पार्श्वयोः पृष्ठे नमस्कुर्यादुपर्यधः ।
सदा मच्चित्तरूपेण विधेहि भवदासनम् ।। ५१

श्रीगुरुं परमानन्दं वन्दे आनन्दविग्रहम्।
यस्य सन्निधिमात्रेण चिदानन्दायते मनः ।। ५२

नमोऽस्तु गुरवे तुभ्यं सहजानन्दरूपिणे।
यस्य वागमृतं हन्ति विषं संसारसंज्ञकम् ।। ५३

नानायुक्तचोपदेशेन धारिता शिष्यसन्ततिः।
तत्कृपासारवेदेन गुरुचित्पदमच्युतम् ।। ५४

अच्युताय नमस्तस्मै गुरवे परमात्मने।
स्वारामोक्तपदेच्छूनां दत्तं येनाच्युतं पदम् ।। ५५

नमोऽच्युताय गुरवे अज्ञानध्वान्त-भानवे।
शिष्य-सन्मार्गपटवे कृपापीयूषसिन्धवे॥ ५६

ओमच्युताय गुरवे शिष्य-संसारसेतवे।
भक्तकार्यैकसिंहाय नमस्ते चित्सुखात्मने॥ ५७

गुरुनामसमं दैवं न पिता न च बान्धवाः।
गुरुनामसमं स्वामी नेदृशं परमं पदम्॥ ५८

एकाक्षरप्रदातारं यो गुरुं नैव मन्यते।
श्वानयोनिशतं गत्वा चाण्डालेष्वभिजायते॥ ५९

गुरुत्यागाद्भवेन्मृत्युर्मन्त्रत्यागाद्दरिद्रता।
गुरुमन्त्रपरित्यागी रौरवं नरकं व्रजेत्॥ ६०

शिवक्रोधाद्गुरुस्त्राता गुरुक्रोधाच्छिवो न हि।
तस्मात्सर्वप्रयत्नेन गुरोराज्ञां न लंघयेत्॥ ६१

संसारसागरसमुद्धरणैकमन्त्रं
ब्रह्मादिदेवमुनिपूजितसिद्धमन्त्रम्।
दारिद्र्यदुःखभवरोगविनाशमन्त्रं
वन्दे महाभयहरं गुरुराजमन्त्रम्॥ ६२

सप्तकोटिमहामन्त्राश्चित्तविभ्रंशकारकाः।
एक एव महामन्त्रो गुरुरित्यक्षरद्वयम्॥ ६३

यस्य प्रसादादहमेव सर्वं मय्येव सर्वं परिकल्पितं च।
इत्थं विजानामि सदात्मरूपं तस्यांघ्रिपद्मं प्रणतोऽस्मि नित्यम्॥

अज्ञानतिमिरान्धस्य विषयाक्रान्तचेतसः।
ज्ञानप्रभाप्रदानेन प्रसादं कुरु मे प्रभो॥ ६५

*इति तृतीयोऽध्यायः॥*

*॥ गुरुगीता समाप्ता॥*

# ८. भक्तिनिरूपणम्

## दत्तपुराणतः उपासनाविधिनिरूपणपरम् (३-१)

श्रीगणेशाय नमः

प्रयतेः सुलभो भक्त्याऽयमात्मा पुरुषः परः ।
इति वेदादिनोक्तं तद्भक्तिर्मुख्याऽधुनोच्यते ॥ १ ॥

निर्विकल्पं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ।
ये मंदास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ २ ॥

वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ।
तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम् ॥ ३ ॥

इत्युक्तेर्नवधा भक्तिर्वाच्याऽत्र स्मरणात्मिका ।
श्रेष्ठाऽर्ध्याऽन्यत्र च व्याप्ता हृच्छुद्ध्यास्य पदप्रदा ॥ ४ ॥

सहस्राङ्गात्मकर्माख्यभगवत्स्मरणात्सदा ।
कृतं कर्माप्यकर्मैव येनैष द्राग्विमुच्यते ॥ ५ ॥

कृत्वेश्वरे परां भक्तिं भगवत्कीर्तनादपि ।
सद्भक्तो मायिकं पाशं छित्त्वा याति स सद्गतिम् ॥ ६ ॥

तद्गुणश्रवणाच्चापि श्रद्धावानबहिर्मुखः ।
समाहितोऽनसूयुर्ना क्षिप्रं नैष्कर्म्यसिद्धिभाक् ॥ ७ ॥

वज्राङ्कुशध्वजाब्जाङ्कभगवत्पादसेवनात् ।
भित्त्वा मायावृतिं सत्त्वशुद्धो याति परं पदम् ॥ ८ ॥

जलेऽष्टास्रं कनिष्ठिक्या लिखित्वा तारमन्तरे ।
पत्रेष्वष्टाक्षरं चैकं हृत्स्थमावाह्य तत्र षट् ॥ ९ ॥

प्रदर्श्य मुद्रा ऋष्यादीन्स्मृत्वा विन्यस्य चोंकृतेः।
मात्राः शाखाङ्गेषु भूखवाताग्न्यब्बीजतो हृदा ॥ १० ॥

दत्त्वोपचारान् गन्धादीन् जपित्वाऽष्टसहस्रकम्।
तर्पयित्वा चाष्टशतमृष्यादीनेकवारतः ॥ ११ ॥

पुनः संपूज्य विन्यस्य तं स्वात्मन्युद्वसेत्परम्।
त्रिसंध्यमर्चनं त्वेवं यतेरन्यस्य चोच्यते ॥ १२ ॥

लब्ध्वा पूर्वं स्वगृह्योक्तं द्विजत्वं भक्तिमान्शुचिः।
ज्ञात्वा धनर्णसिद्धारिचक्रसिद्धं मनुं गुरोः ॥ १३ ॥

लब्ध्वाऽर्णसंख्यालक्षां प्राक् पुरश्चर्यां यथाविधि।
कृत्वाऽनेनार्चयेदर्चां नियतो नित्यकर्मकृत् ॥ १४ ॥

लौहीं वा संस्कृतां शैलीं विभोः सास्रां सलक्षणाम्।
सोऽपि लब्ध्वाऽखिलान्कामान् देहान्ते तन्मयो भवेत् ॥ १५ ॥

पुरा नारायणं ब्रह्मा सत्यक्षेत्रे दयानिधिम्।
प्रणतोऽपृच्छदेकं किमुपास्यं दैवतं परम् ॥ १६ ॥

स प्राह मामकं धाम यद्दत्तात्रेयसंज्ञितम्।
सदानन्दात्मकं शुद्धं सात्विकं तारकं परम् ॥ १७ ॥

विश्वरूपं जगद्योनिं तदेवोपास्स्व दैवतम्।
लकारं वह्निसंयुक्तं सतुण्डाक्षरबिन्दुकम् (ल्रां) ॥ १८ ॥

तदर्चने मनुं विद्धि छन्दो गायत्रिकाऽस्य च।
सदाशिव ऋषिर्देवो दत्तात्रेयश्चतुर्भुजः ॥ १९ ॥

मनुरेकाक्षरोऽस्यायं जाप्यो गर्भादितारणः।
तारः श्रीदुर्गा क्रौं भूमिदत्तैकाक्षरयुङ्मनुः ॥ २० ॥

ओं श्रीं ह्रीं क्रों लं (ग्लौं)

द्रां षडक्षरो योगदोऽयं सर्वसंपत्समृद्धिकृत् ।
ऋष्यादिः पूर्ववन्न्यासो बीजैः शाखाहृदादिषु ।। २१ ।।

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं विभुम् ।
आत्ममायारतं देवमवधूतं दिगम्बरम् ।। २२ ।।

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् ।
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ।।२३ ।।

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ।
भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम् ।। २४ ।।

इत्यौपनिषदं दत्तं ध्यात्वैकाग्रयं मनुं जपेत् ।
स वाञ्छितफलं भुक्त्वा परत्र श्रेय आप्नुयात् ।। २५ ।।

सैकाक्षरं चतुर्थ्यन्तं दत्तात्रेयं नमोऽन्वितम् ।
अष्टार्णमन्त्रं गायत्रं विद्धि द्रां बीजमस्य तु ।। २६ ।।

(ओं द्रां दत्तात्रेयाय नमः ।)

चतुर्थी कीलकं शक्तिर्नम आर्षः सदाशिवः ।
दत्तात्रेयपदस्यार्थः सत्यानन्दचिदात्मकः ।। २७ ।।

प्रह्वीभावो नमोऽर्थस्तु पूर्णानन्दैकविग्रहः ।
तारं सबिन्दुं तुण्डार्णं दुर्गां क्रों तुर्यमेहि च ।। २८ ।।

दत्तात्रेयेति संबुद्ध्या स्वाहान्तं द्वादशाक्षरम् ।
सर्वकामदुघं विद्धि गायत्रं भो शिवार्षकम् ।। २९ ।।

(ओं आं ह्रीं क्रों एहि दत्तात्रेय स्वाहा )

वराभयदहस्तं यो भजेदाभ्यां महाव्रतः ।
सर्वान्कामानिहैवास्वा सोऽमृतो भवति ध्रुवम् ।। ३० ।।

ॐ बीजं स्वाहाऽत्र शक्तिः संबुद्धिः कीलकं क्रमात् ।
द्वाभ्यां हृदि च के द्वाभ्यां शिखायां क्रियया न्यसेत् ।। ३१ ।।

संबुद्धिभ्यां स्कन्धचक्षुर्द्वयेऽस्त्रेऽन्त्येन तन्मयः ।
चतुर्बीजैः सक्रियाख्यान्त्याभ्यां न्यासं करादिषु ।। ३२ ।।

कृत्वा यजेद्देवदेवं यन्त्रन्यस्तमभीष्टदम् ।
दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ।। ३३ ।।

दिगम्बर मुने बालपिशाच ज्ञानसागर ।
आनुष्टुभः शिवार्षोऽयं षड्भुजात्रेयदैवतः ।। ३४ ।।

द्वाभ्यां द्वाभ्यां हृच्छिरसोः शिखायामेकतो गले ।
द्वाभ्यामेकैकेन दोर्दृग्द्वये द्वाभ्यां तथास्त्रके ।। ३५

विन्यस्य जपिता दोषमुक्तः सर्वोपकारकृत् ।
तारं वायुं क्लां कामं क्लं ह्रां दुर्गा ह्रूं च विद्धि सौः ।। ३६

दत्तात्रेयं चतुर्थ्यन्तं स्वाहान्तं षोडशाक्षरम् ।
वायुस्थाने तु वाग्बीजं नमोऽन्ते योजयाथवा ।। ३७

ओं यं क्लां क्लीं क्लं ह्रां ह्रीं ह्रूं सौः (अथवा ओं ऐं क्लं... सौः)
दत्तात्रेयाय स्वाहा (नमः ।)

स्वाहैकत्र नमोऽन्यत्र शक्तिर्बीजं च कीलकम् ।
तारश्चतुर्थी गायत्री मंत्रराजः शिवोदितः ।। ३८ ।।

हृदि द्वे के त्रीणि शिखायां चैकं कवचे दृशोः ।
चतुर्थीमन्त्यमस्त्रे च विन्यस्य जपकामदम् ।। ३९ ।।

सच्चिदानन्दस्वरूपी सुखी मुक्तो भवत्यतः ।
सिद्धगन्धर्वादिसङ्गी लक्षजाप्यष्टसिद्धिभाक् ।। ४० ।।

त्रिदेवलोकसंचारी कोटिजापी च दत्तवत् ।
दशकोटिजपी साक्षाज्जरामरणवर्जितः ।। ४१ ।।

द्व्यष्टकोटिजपी सिद्धः परकायगतादिकृत् ।
मन्त्रशक्तिरियं श्लोका अभिगीता इहाप्यमी ।। ४२ ।।

खड्गस्तम्भो जलस्तम्भः सेनास्तम्भस्तथैव च ।
इच्छासिद्धिर्वशित्वं च दिक्पालैः सह भाषणम् ।।४३ ।।

वायुवद्गतिरित्याहुराह्लादित्वं च चन्द्रवत् ।
अग्निवत्सर्वभक्षत्वं नित्यतृप्तत्वमेव च ।। ४४ ।।

सर्वभाषापरिज्ञानं सर्वचित्तावबोधनम् ।
वापीकूपसमुद्राणां पर्वतानां च चालनम् ।। ४५ ।।
दत्तात्रेयमयः स्वच्छो भवेत्स व्यासवत्कविः ।
इतीदं षोडशार्णस्य माहात्म्यं तत्प्रयत्नतः ।। ४६ ।।
प्राणो देयो मनश्चक्षुश्छित्त्वा देयं शिरो वपुः ।
न देयः षोडशार्णोऽसौ सच्छिष्याय महात्मने ।। ४७ ।।

महागुणवते देयः कुप्येत प्रभुरन्यथा ।
मालाकमण्डलू वाद्यत्रिशूले शङ्खचक्रके ।। ४८ ।।

दधानमत्रिवरदं दत्तात्रेयं त्र्यधीश्वरम् ।
ध्यात्वेत्थं विधिवन्मन्त्रजाप्युक्तफलभाग्भवेत् ।। ४९ ।।

ओं नमो भगवान्दत्तात्रेयः स्मरणमात्रसंतुष्टो
महाभयनिवारणो महाज्ञानप्रदः ॥ ५०॥

चिदानन्दात्मा बालोन्मत्तपिशाचवेषो
महायोग्यवधूतोऽनसूयानन्दवर्धनोऽत्रिपुत्रः ॥ ५१ ॥

ओं भवबन्धविमोचनो ह्रीं सर्वभूतिदः
क्रों असाध्याकर्षण ऐं वाक्प्रदः ॥ ५२ ॥

क्लीं जगत्त्रयवशीकरणः सौः सर्वमनःक्षोभणः
श्रीं महासंपत्प्रदो ग्लौं भूमण्डलाधिपत्यप्रदः ॥ ५३ ॥

द्रां चिरजीवी वषड्वशीकुरु वौषडाकर्षय
हुं विद्वेषय फडुच्चाटय ठः ठः ॥ ५४ ॥

स्तम्भय खें खें मारय नमः संपन्नय स्वाहा
पेषय परमन्त्रपरतन्त्रपरयन्त्राणि ॥ ५५ ॥

छिन्धि ग्रहान्निवारय व्याधीन्विनाशय
दुःखं हर दारिद्र्यं विद्रावय देहं पोषय ॥ ५६ ॥

चित्तं तोषय सर्वमन्त्रस्वरूपः ।
सर्वतन्त्रस्वरूपः सर्वपल्लवस्वरूपः ॥ ५७

ओं नमो महासिद्धः स्वाहान्तो मालामन्त्रः।
प्रथमान्तां चतुर्थ्या द्विः क्रियाश्च व्याहरेत् ॥ ५८ ॥

विष्णुनोक्ता इमे मन्त्रा ब्रह्मणे कामधेनवः ।
प्रयोगग्रहभूतारिकृद्दग्रुक्तापभीतिहाः ॥ ५९ ॥

कामिनोऽभीष्टफलदा देवसान्निध्यकारकाः ।
तद्वच्च वज्रकवचं दत्तनामसहस्रकम् ॥ ६० ॥

एषामन्यतमेनेशं यो वैदिकविधानतः ।
उपास्ते चित्तशुद्ध्या स मुच्यतेऽत्र परत्र वा ।। ६१ ।।

दत्तात्रेयनिवासं तदाचण्डालश्वगोखरम् ।
ब्रह्मादिस्तम्बपर्यन्तं समदृक् प्रणमेत्सुधीः ।। ६२।।

चालको भासकोऽस्त्येषां सच्चिदात्मा स्वयंप्रभः ।
अस्ति भाति प्रियत्वेन भगवानेव नापरः ।। ६३ ।।
यथाधिपे वशा भृत्या निर्माना ईश्वरे तथा ।
विदध्यात्स्वमनो दास्यं निरीहं द्वैतदर्शने ।। ६४ ।।

सख्योः सख्यं यथा लोके निरपेक्षं तथाऽऽत्मनः ।
परात्मनाऽपि सततं समाधेः प्राक् प्रकल्पयेत् ।। ६५ ।।

कर्तृत्वादि न मय्येके शुद्धे देहादिसाक्षिणि ।
इतीक्षणमसंदिग्धं सर्वस्वात्मनिवेदनम् ।। ६६ ।।

अतीत्य वरदेशादीन् काश्यां संतोष्य दीपकः ।
वेदधर्मगुरुं रुग्णं कष्टेन हि महामतिः ।। ६७ ।।

श्रीदत्तलीलाश्रवणं ययाचे तुष्ट एव सः ।
गुरुः शिष्याय यत्प्राह मुक्त्यै तत्सार उच्यते ।। ६८ ।।

*इति दत्तपुराणे श्रीदत्तात्रेयभक्तिनिरूपणं संपूर्णम् ।।*



## ९.महावाक्यार्थबोधः

त्वामग्रे रविचन्द्रादेर्भासकं लोकचालकम्।
पृच्छामीदं कथं ज्ञानमाप्नुयां दयया वद॥ १

इति पृष्टोऽर्जुनेनाह श्रीदत्तः शृणु भूपते।
यदेकं परमं ब्रह्म नित्यमुक्तमविक्रियम्॥ २

तत्स्वशक्तिसमाविष्टमीशमाहुर्मनीषिणः।
स विष्णुः स शिवो ब्रह्मा सोऽग्निरिन्द्रः स्वराड् हरिः॥ ३

धाता कालः क्रिया कर्ता जीवनं मृत्युरामयः।
नारायणो हृषीकेशो भूतं भव्यं भवच्च सः॥ ४

वस्तुमात्रमिदं सर्वमहमेवास्मि सर्वदृक्।
अहमेव परं ध्येयं मिथ्याभ्रमनिवृत्तये॥ ५

भ्रमस्यापि च नामानि कल्पितानि शृणुष्व तत्।
मायाऽविद्या परा देवी मनोऽनादिर्भ्रमस्त्रिवृत्॥ ६

प्रधानं प्रकृतिर्ब्रह्मयोनिः शक्तिश्च कारणम्।
मोहोऽध्यासस्तमोऽज्ञानं प्रस्वापः कारणं त्विदम्॥ ७

अतोऽविद्या पञ्चपर्वा महामोहो द्विरूपकः।
विक्षेपावृतिशक्त्याख्या आद्यात्सर्गोऽत्र भौतिकः॥ ८

स्वरूपमावृणोत्यन्यो मुक्तं चेशं विना भृशम्।
योऽविद्यार्तोऽवशो दुःखी भ्रान्तोऽज्ञो जीव एव सः॥ ९

समष्टिरीशः सर्वज्ञो वशमायः स्वराट् सुखः।
असत्वाभानाख्यभक्तावृतिहृद्गुरुरप्यसौ॥ १०

मतं मूढैर्जगन्नित्यं तथा जीवेशयोर्भिदा।
एवं भेदत्रयेणेदं भातं वस्त्वेव मायया॥ ११

तन्निवृत्त्यै कृता वेदैः सृष्टिप्रलयकल्पना।
मूढस्य सा मता सत्या भ्रमोऽयं लीयते विदा॥ १२

ज्ञानं विद्येति तां प्राहुर्द्वेधा विद्या विचारजा।
परोक्षा चापरोक्षेति तत्राद्या गुरुवक्त्रतः॥ १३

अमानित्वादियुक्तैः सा विज्ञेया साधनान्वितैः।
गुरुभक्तिं विना साऽपि दुर्लभा मोक्षदायिनी॥ १४

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ १५

गुर्वनुग्रहमात्रेण विचारः सुलभो नृणाम्।
विचारेण परं तत्त्वं स्वयमेव प्रकाशते॥ १६

राजंस्त्वयाखिलं कर्म योगयागादिकं मयि।
समर्पितं ततोऽयं ते विचारोऽद्य समुत्थितः॥ १७

वैराग्यं परमं जातं भ्रममोहमलापहम्।
अतो विद्याप्रसादस्ते भविष्यत्यचिरेण हि॥ १८

विद्या ज्ञेया परोक्षेयं वेदान्तश्रवणात्मिका।
उपक्रमादिभिर्लिङ्गैर्यत्तात्पर्यावधारणम्॥ १९

तदेव श्रवणं तत्तु हरेत्संशयभावनाम्।
असत्त्वावरणं चापि वस्त्वस्तीति तदेक्षते॥ २०

मननं कार्यमस्येदमाश्वसंभावनाहरम्।
वशीकाराख्यवैराग्ययुक्तस्येदं सुखावहम्॥ २१

आत्मैव नेह नानास्ति मोहितस्य जगत्त्विदम्।
भाति नान्यस्य मिथ्येदं स्वप्नो निद्रागमे यथा॥ २२

विषयान्ध्यायतो यद्वन्मनोरथपरम्परा ।
असत्येव सदाभाति नानाविषयगोचरा ।। २३

परमात्मैक एवाहं वस्तुमात्रश्चिदात्मकः ।
मयि मिथ्याविभागोऽयं दृश्यतेऽनाद्यविद्यया ।। २४

भ्रमो मोहो महामाया प्रधानं प्रकृतिर्मनः ।
अज्ञानं शक्तिरव्यक्तं गुणसाम्यमितीरिता ।। २५

सैव मिथ्यामतिर्यस्या इदं भातं चराचरम् ।
एवं विचारश्रवणानुसारि मननं तु तत् ।। २६

सच्चिदानन्दलक्ष्मापि परात्मा माययाऽवृतः ।
निजं स्वरूपं विस्मृत्य ययेदं दृश्यते जगत् ।। २७

महांस्ततोऽहमस्तस्मात्तन्मात्राणि ततः क्रमात् ।
भूतेन्द्रियसुराणां च सर्गस्त्र्यात्माऽहमः क्रमात् ।। २८

न ह्यत्र नियमो राजन्नसत्ये मानसभ्रमे ।
कदाचिद्युगपत्सृष्टिः क्रमसृष्टिः कदाचन ।। २९

देहाः सुरासुरनरतिरश्चां भौतिका इमे ।
स्थूलैः स्थूलानि सूक्ष्मैश्च सूक्ष्माण्येवं भवोद्भवः ।। ३०

उपक्रमोऽयमाख्यात उपसंहार उच्यते ।
भूतेषु भौतिकानीह क्रमाद्योगी विलापयेत् ।। ३१

पृथ्वी जले जलं वह्नौ वह्निर्वायौ स खे च खम् ।
अहमि प्राणगो देवा मनश्चापि स्वकारणे ।। ३२

अहङ्कारोऽपि महति सोऽव्यक्ते तच्च निष्कले ।
स एवाहं परात्मैकः शुद्धो मुक्त उपाधितः ।। ३३

एवं निदिध्यासनत एकः स्वात्मैव शिष्यते।
तस्मान्नास्त्यपरं किञ्चिदात्मैवायं यथा तथा ।। ३४

राजन्मम प्रसादात्त्वं खलु धन्योऽस्यसंशयम्।
अन्तःकरणशुद्धिस्ते जाता वैराग्यमुत्तमम्।। ३५

मयि भक्तिर्दृढा प्रेम्णा श्रवणं चापि विस्तरात्।
प्रपञ्चास्थाऽपि चित्तस्था सर्वथा विलयं गता ।। ३६

तत्त्वमेकं परं ब्रह्म न द्वितीयं कदापि हि।
एवं शमादिरूपां तामारूढो भव भूमिकाम्।। ३७

त्वं साक्षात्कारसूपायक्रमं विद्ध्यथ भूपते।
दत्तचित्तो भवाद्यात्र तत्त्वनिश्चयकारकः ।। ३८

सर्वसाधनसंपन्नः पुरुषो जातनिश्चयः।
श्रोत्रियं ब्रह्मनिष्ठं तं सद्गुरुं शरणं व्रजेत्।। ३९

तत्त्वमस्यादिवाक्यार्थमुपदिष्टं तु षड्विधैः।
लिङ्गैर्धिया समालोच्य बुधः समवधारयेत्।। ४०

श्रवणं त्विदमेवोक्तं तत्समासेन ते ब्रुवे।
यतस्त्वं शिष्यतां प्राप्तो मत्सेवाहतकिल्बिषः ।। ४१

तत्पदेन परं ब्रह्म त्वंपदेन च पूरुषम्।
अनूद्यैक्यं तयोर्भूप बोध्यतेऽसिपदेन सत्।। ४२

विरुद्धस्य त्वमर्थस्य तदर्थत्वं कथं भवेत्।
इति चेच्छृणु राजेन्द्र तयोरैक्ये निदर्शनम्।। ४३

देवदत्तः कचिद्दृष्टो युवा देशान्तरे स च।
पुनर्दृष्टो जरां प्राप्तः सोऽयमित्यवधार्यते।। ४४

पूर्वदेशमवस्थां च त्यक्त्वेदं तस्य वार्द्धकम्।
देशं चापि यथैकेन पिण्डेनैक्यं प्रतीयते ॥ ४५

त्यक्त्वा द्व्यंशौ तथाऽत्रापि वाक्य ऐक्यं हि लक्ष्यते।
त्वंपदस्य च वाच्यार्थः संसारीति सुनिश्चितः ॥ ४६

कर्ता भोक्ता सुखी दुःखी माययैव न तत्त्वतः।
देहेन्द्रियमनःप्राणाहंकारेभ्यो विलक्षणः ॥ ४७

वस्तुतः सच्चिदानन्दस्वरूपो गुणगोचरः।
एकांशस्तत्र चिद्रूपमन्यः संसारिताऽस्य च ॥ ४८

एवं त्वमर्थं निश्चित्य तदर्थमपि निश्चिनु।
अतद्व्यावृत्त्या विधिना साक्षाच्च श्रुतियुक्तितः ॥ ४९

तत्पदस्य च वाच्यार्थः सर्वज्ञः परमेश्वरः।
तस्यैकोऽम्शोऽपि चिद्रूपं सर्वज्ञत्वादि चापरः ॥ ५०

त्यक्त्वा विरुद्धवाच्यांशद्वयं जीवेशयोरिह।
लक्ष्यौ चिदंशौ निर्बाधं पदयोरुभयोरपि ॥ ५१

अविरुद्धं तयोरैक्यं लक्षणालक्षितं द्वयोः।
वाक्यार्थोऽयं सुनिष्पन्नस्त्वं ब्रह्म परमं हि तत् ॥ ५२

तदेव त्वं परं ब्रह्म नास्ति भेदः कथञ्चन।
अखण्डैकरसत्वेन वाक्यार्थोऽत्र सतां मतः ॥ ५३

विशेष्यं त्वंपदं तस्य तत्पदं च विशेषणम्।
निरस्येतेऽस्य दुःखित्वं सुखित्वं च विधीयते ॥ ५४

वैपरीत्येन विज्ञेयं विशेष्यं तत्पदं तथा।
विशेषणं त्वंपदं च पारोक्ष्यस्य निरासकृत् ॥ ५५

तद्ब्रह्म परमं शुद्धं त्वमात्मैव निरामयः।
इत्यैक्यं भूप विज्ञेयं वेदोक्तं गुर्वनुग्रहात्॥ ५६

स्वात्मैक्यार्थमियं प्रोक्ता सुधीभिर्भागलक्षणा।
त्रिकाण्डेनापि वेदेन सोऽयमर्थो विनिश्चितः॥ ५७

स्थूलधीभिः सुदुर्ज्ञेयो विज्ञेयो हि मनीषिभिः।
पर्यवस्यन्ति वेदाद्या अत्रैव विविधा अपि॥ ५८

शास्त्रतत्त्वमविज्ञाय मूढाः शास्त्राणि सर्वशः।
ते प्रवृत्तिपराण्येव कथयन्ति कुतर्कतः॥ ५९

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥ ६०

प्राक् सदैवेत्युपक्रम्यैतदात्म्यमिदमेव सत्।
उपसंहृतमित्येकमभ्यासो नवधा परम्॥ ६१

शाब्देनैव ह्यखण्डार्थविषयत्वं तृतीयकम्।
तुर्यं विदेहकैवल्यं प्रारब्धान्ते विवेकिनः॥ ६२

षष्ठं मृदादिदृष्टान्तैर्निर्णयस्तूपपत्तिकम्।
सृष्टिस्थित्यन्तप्रवेशानियमः शोधनं फलम्॥ ६३

सप्तार्थवादास्तद्रूपं पञ्चमं लिङ्गमुच्यते।
सर्वस्यात्मन उत्पत्तेरवस्थानाच्च तत्र हि॥ ६४

पुनर्लयाज्जगौ वेदः कारणब्रह्ममात्रताम्।
सूर्यस्येव जले चात्र प्रवेशमपि चात्र तु॥ ६५

अन्तर्यामितया भेदात्सदा नियमनं स्मृतम्।
तथा रोहितरूपाद्यैः पदार्थपरिशोधनम्॥ ६६

अभेदज्ञानस्य परं स्वात्मैक्यममृतं फलम्।
एवं सप्तार्थवादात्मलक्षणं पञ्चमं मतम्।। ६७

षड्लिङ्गैरिति तात्पर्यावधृतिः श्रवणं स्मृतम्।
आस्थायाथो योगभूमिं मननादि चरेद्बुधः ।। ६८

*इति दत्तपुराणे श्रीमहावाक्यार्थबोधः सम्पूर्णः (४-१)।*



श्री अवधूताय नमः।

१. स्तोत्राणि

# १०. दत्तात्रेयसहस्रनामस्तोत्रम्

निखिलागमतत्त्वज्ञ ब्रह्मध्यानपरायण।
वदास्माकं मुक्त्युपायं सूत सर्वोपकारकम्।। १

सर्वदेवेषु को देवः सद्यो मोक्षप्रदो भवेत्।
को मनुर्वा भवेत्तस्य सद्यः प्रीतिकरो ध्रुवम्।। २

सूत उवाच—
निगमागमतत्त्वज्ञो ह्यवधूतश्चिदम्बरः।
भक्तवात्सल्यप्रवणो दत्त एव हि केवलः।। ३

सदा प्रसन्नवदनो भक्तचिन्तैकतत्परः।
तस्य नामान्यनन्तानि वर्तन्तेऽथाप्यदः परम्।। ४

दत्तस्य नामसाहस्रं तस्य प्रीतिविवर्धनम्।
यस्त्विदं पठते नित्यं दत्तात्रेयैकमानसः।। ५

मुच्यते सर्वपापेभ्यः स सद्यो नात्र संशयः।
अन्ते तद्धाम संयाति पुनरावृत्तिदुर्लभम्।। ६

अस्य श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रमन्त्रस्य अवधूत ऋषिः । अनुष्टुप् छन्दः । दिगम्बरो देवता । ओं बीजम् । ह्रीं शक्तिः। क्रौं कीलकम्। श्रीदत्तात्रेयप्रीत्यर्थे जपे विनियोगः।।

अथ ध्यानम्—

दिगम्बरं भस्मविलेपिताङ्गं बोधात्मकं मुक्तिकरं प्रसन्नम्।
निर्मानसं श्यामतनुं भजेऽहं दत्तात्रेयं ब्रह्मसमाधियुक्तम्।। ७

दत्तात्रेयो महायोगी योगेशश्चामरप्रभुः ।
मुनिर्दिगम्बरो बालो मायामुक्तो मदापहः ।। ८

अवधूतो महानाथः शङ्करोऽमरवल्लभः ।
महादेवश्चादिदेवः पुराणप्रभुरीश्वरः ।। ९

सत्त्वकृत्सत्त्वभृद्भावः सत्त्वात्मा सत्त्वसागरः ।
सत्त्ववित्सत्त्वसाक्षी च सत्त्वसाध्योऽमराधिपः ।। १०

भूतकृद्भूतभृच्चैव भूतात्मा भूतसम्भवः।
भूतभावो भवो भूतवित्तथा भूतकारणः।। ११

भूतसाक्षी प्रभूतिश्च भूतानां परमा गतिः।
भूतसङ्गविहीनात्मा भूतात्मा भूतशङ्करः ।। १२

भूतनाथो महानाथ आदिनाथो महेश्वरः।
सर्वभूतनिवासात्मा भूतसन्तापनाशनः।। १३

सर्वात्मा सर्वभृत् सर्वः सर्वज्ञः सर्वनिर्णयः ।
सर्वसाक्षी बृहद्भानुः सर्ववित् सर्वमङ्गलः ।। १४

शान्तः सत्यः समः पूर्ण एकाकी कमलापतिः।
रामो रामप्रियश्चैव विरामो रामकारणः ।। १५

शुद्धात्मा पावनोऽनन्तः प्रतीतः परमार्थभृत्।
हंससाक्षी विभुश्चैव प्रभुः प्रलय इत्यपि ।। १६

सिद्धात्मा परमात्मा च सिद्धानां परमा गतिः ।
सिद्धिसिद्धस्तथा साध्यः साधनो ह्युत्तमस्तथा ।। १७

सुलक्षणः सुमेधावी विद्यावान् विगतान्तरः ।
विज्वरश्च महाबाहुर्बहुलानन्दवर्धनः।। १८

अव्यक्तपुरुषः प्राज्ञः परज्ञः परमार्थदृक्।
परापरविनिर्मुक्तो युक्तस्तत्त्वप्रकाशवान्।। १९

दयावान् भगवान् भावी भावात्मा भावकारणः ।
भवसन्तापनाशश्च पुष्पवान् पण्डितो बुधः ।। २०

प्रत्यक्षवस्तुर्विश्वात्मा प्रत्यग्ब्रह्म सनातनः ।
प्रमाणविगतश्चैव प्रत्याहारनियोजकः ।। २१

प्रणवः प्रणवातीतः प्रमुखः प्रलयात्मकः।
मृत्युञ्जयो विविक्तात्मा शङ्करात्मा परो वपुः ।। २२

परमस्तनुविज्ञेयः परमात्मनि संस्थितः ।
प्रबोधकलनाधारः प्रभावप्रवरोत्तमः।। २३

चिदम्बरश्चिद्विलासश्चिदाकाशश्चिदुत्तमः ।
चित्तचैतन्यचित्तात्मा देवानां परमा गतिः ।। २४

अचेत्यश्चेतनाधारश्चेतनाचित्तविक्रमः ।
चित्तात्मा चेतनारूपो लसत्पङ्कजलोचनः।। २५

परब्रह्म परं ज्योतिः परं धाम परन्तपः ।
परं सूत्रं परं तन्त्रं पवित्रः परमोहवान्।। २६

क्षेत्रज्ञः क्षेत्रगः क्षेत्रः क्षेत्राधारः पुरञ्जनः ।
क्षेत्रशून्यो लोकसाक्षी क्षेत्रवान् बहुनायकः ।। २७

योगेन्द्रो योगपूज्यश्च योग्य आत्मविदां शुचिः ।
योगमायाधरः स्थाणुरचलः कमलापतिः ।। २८

योगेशो योगनिर्माता योगज्ञानप्रकाशनः।
योगपालो लोकपालः संसारतमनाशनः ।। २९

गुह्यो गुह्यतमो गुप्तो मुक्तो युक्तः सनातनः ।
गहनो गगनाकारो गम्भीरो गणनायकः ।। ३०

गोविन्दो गोपतिर्गोप्ता गोभागो भावसंस्थितः ।
गोसाक्षी गोतमारिश्च गान्धारो गगनाकृतिः ।। ३१

योगयुक्तो भोगयुक्तः शङ्कामुक्तसमाधिमान् ।
सहजः सकलेशानः कार्तवीर्यवरप्रदः ।। ३२

सरजा विरजाः पुमान् पावनः पापनाशनः ।
परावरविनिर्मुक्तः परंज्योतिः पुरातनः ।। ३३

नानाज्योतिरनेकात्मा स्वयंज्योतिः सदाशिवः ।
दिव्यज्योतिर्मयश्चैव सत्यविज्ञानभास्करः ।। ३४

नित्यशुद्धःपरः पूर्णः प्रकाशः प्रकटोद्भवः ।
प्रमादविगतश्चैव परेशः परविक्रमः।। ३५

योगी योगो योगपश्च योगाभ्यासप्रकाशनः ।
योक्ता मोक्ता विधाता च त्राता पाता निरायुधः ।। ३६

नित्यमुक्तो नित्ययुक्तः सत्यः सत्यपराक्रमः ।
सत्त्वशुद्धिकरः सत्त्वस्तथा सत्त्वभृतां गतिः ।। ३७

श्रीधरः श्रीवपुः श्रीमान् श्रीनिवासोऽमरार्चितः ।
श्रीनिधिः श्रीपतिः श्रेष्ठः श्रेयस्कश्चरमाश्रयः ॥ ३८

त्यागी त्यागार्थसम्पन्नस्त्यागात्मा त्यागविग्रहः ।
त्यागलक्षणसिद्धात्मा त्यागज्ञस्त्यागकारणः ॥ ३९

भोगो भोक्ता तथा भोग्यो भोगसाधनकारणः।
भोगी भोगार्थसम्पन्नो भोगज्ञानप्रकाशनः ॥ ४०

केवलः केशवः कृष्णः कंवासाः कमलालयः।
कमलासनपूज्यश्च हरिरज्ञानखण्डनः ॥ ४१

महात्मा महदादिश्च महेशोत्तमवन्दितः।
मनोबुद्धिविहीनात्मा मानात्मा मानवाधिपः ॥ ४२

भुवनेशो विभूतिश्च धृतिर्मेधा स्मृतिर्दया ।
दुःखदावानलो बुद्धःप्रबुद्धः परमेश्वरः ॥ ४३

कामहा क्रोधहा चैव दम्भदर्पमदापहः।
अज्ञानतिमिरारिश्च भवारिर्भुवनेश्वरः ॥ ४४

रूपकृद्रूपभृद्रूपी रूपात्मा रूपकारणः ।
रूपज्ञो रूपसाक्षी च नामरूपो गुणान्तकः॥ ४५

अप्रमेयः प्रमेयश्च प्रमाणं प्रणवाश्रयः ।
प्रमाणरहितोऽचिन्त्यश्चेतनाविगतोऽजरः ॥ ४६

अक्षरोऽक्षरमुक्तश्च विज्वरो ज्वरनाशनः ।
विशिष्टो वित्तशास्त्री च दृष्टो दृष्टान्तवर्जितः॥ ४७

गुणेशो गुणकायश्च गुणात्मा गुणभावनः ।
अनन्तगुणसम्पन्नो गुणगर्भो गुणाधिपः ॥ ४८

गणेशो गुणनाथश्च गुणात्मा गणभावनः ।
गणबन्धुर्विवेकात्मा गुणयुक्तः पराक्रमी ।। ४९

अतर्क्यः क्रतुरग्निश्च कृतज्ञः सफलाश्रयः ।
यज्ञश्च यज्ञफलदो यज्ञ इज्योऽमरोत्तमः ।। ५०

हिरण्यगर्भः श्रीगर्भः खगर्भः कुणपेश्वरः ।
मायागर्भो लोकगर्भः स्वयम्भूर्भुवनान्तकः ।। ५१

निष्पापो निबिडो नन्दी बोधी बोधसमाश्रयः।
बोधात्मा बोधनात्मा च भेदवैतण्डखण्डनः।। ५२

स्वाभाव्यो भावनिर्मुक्तो व्यक्तोऽव्यक्तसमाश्रयः।
नित्यतृप्तो निराभासो निर्वाणः शरणः सुहृत् ।। ५३

गुह्येशो गुणगम्भीरो गुणदोषनिवारणः ।
गुणसङ्गविहीनश्च योगारेर्दर्पनाशनः ।। ५४

आनन्दः परमानन्दः स्वानन्दसुखवर्धनः ।
सत्यानन्दश्चिदानन्दः सर्वानन्दपरायणः ।। ५५

सद्रूपः सहजः सत्यः स्वानन्दः सुमनोहरः।
सर्वः सर्वान्तरश्चैव पूर्वात्पूर्वतरस्तथा ।। ५६

खमयः खपरः खादिः खम्ब्रह्म खतनुः खगः ।
खवासाः खविहीनश्च खनिधिः खपराश्रयः ।। ५७

अनन्त आदिरूपश्च सूर्यमण्डलमध्यगः।
अमोघः परमामोघः परोक्षः परदः कविः ।। ५८

विश्वचक्षुर्विश्वसाक्षी विश्वबाहुर्धनेश्वरः।
धनञ्जयो महातेजास्तेजिष्ठस्तैजसः सुखी ।। ५९

ज्योतिर्ज्योतिर्मयो जेता ज्योतिषां ज्योतिरात्मकः।
ज्योतिषामपि ज्योतिश्च जनको जनमोहनः ॥ ६०

जितेन्द्रियो जितक्रोधो जितात्मा जितमानसः ।
जितसङ्गो जितप्राणो जितसंसारवासनः ॥ ६१

निर्वासनो निरालम्बो निर्योगक्षेमवर्जितः।
निरीहो निरहङ्कारो निराशीर्निरुपाधिकः ॥ ६२

नित्यबोधो विविक्तात्मा विशुद्धोत्तमगौरवः।
विद्यार्थी परमार्थी च श्रद्धार्थी साधनात्मकः॥ ६३

प्रत्याहारी निराहारी सर्वाहारपरायणः ।
नित्यशुद्धो निराकाङ्क्षी पारायण परायणः ॥ ६४

अणोरणुतरः सूक्ष्मः स्थूलः स्थूलतरस्तथा।
एकस्तथाऽनेकरूपो विश्वरूपः सनातनः ॥ ६५

नैकरूपो विरूपात्मा नैकबोधमयस्तथा।
नैकनाममयश्चैव नैकविद्याविवर्धनः ॥ ६६

एक एकान्तिकश्चैव नानाभावविवर्जितः।
एकाक्षरस्तथा बीजः पूर्णबिम्बः सनातनः ॥ ६७

मन्त्रवीर्यो मन्त्रबीजः शास्त्रवीर्यो जगत्पतिः ।
नानावीर्यधरश्चैव शक्रेशः पृथिवीपतिः ॥ ६८

प्राणेशः प्राणदः प्राणः प्राणायामपरायणः ।
प्राणपञ्चकनिर्मुक्तः कोशपञ्चकवर्जितः ॥ ६९

निश्चलो निष्कलोऽसङ्गो निष्प्रपञ्चो निरामयः ।
निराधारो निराकारो निर्विकारो निरञ्जनः ॥ ७०

निष्प्रतीतो निराभासो निरासक्तो निराकुलः ।
निष्ठासर्वगतश्चैव निरारम्भो निराश्रयः।। ७१

निरन्तरः सर्वगोप्ता शान्तो दान्तो महामुनिः।
निःशब्दः सुकृतः स्वस्थः सत्यवादी सुरेश्वरः ।। ७२

ज्ञानदो ज्ञानविज्ञानी ज्ञानात्माऽऽनन्दपूरितः।
ज्ञानयज्ञविदां दक्षो ज्ञानाग्निर्ज्वलनो बुधः ।। ७३

दयावान् भवरोगारिश्चिकित्साचरमागतिः ।
चन्द्रमण्डलमध्यस्थश्चन्द्रकोटिसुशीतलः ।। ७४

यन्त्रकृत्परमो यन्त्री यन्त्रारूढपराजितः ।
यन्त्रविद्यन्त्रवासश्च यन्त्राधारो धराधरः ।। ७५

तत्त्वज्ञस्तत्त्वभूतात्मा महत्तत्वप्रकाशनः ।
तत्त्वसंख्यानयोगज्ञः सांख्यशास्त्रप्रवर्तकः।। ७६

अनन्तविक्रमो देवो माधवश्च धनेश्वरः ।
साधुः साधुवरिष्ठात्मा सावधानोऽमरोत्तमः ।। ७७

निःसङ्कल्पो निराधारो दुर्धरो ह्यात्मवित्पतिः ।
आरोग्यसुखदश्चैव प्रवरो वासवस्तथा ।। ७८

परेशः परमोदारः प्रत्यक्चैतन्यदुर्गमः।
दुराधर्षो दुरावासो दूरत्वपरिनाशनः ।। ७९

वेदविद्वेदकृद्वेदो वेदात्मा विमलाशयः ।
विविक्तसेवी च संसारश्रमनाशनस्तथा ।। ८०

ब्रह्मयोनिर्बृहद्योनिर्विश्वयोनिर्विदेहवान् ।
विशालाक्षो विश्वनाथो हाटकाङ्गदभूषणः ।।८१

अबाध्यो जगदाराध्यो जगदार्जवपालनः।
जनवान् धनवान् धर्मी धर्मगो धर्मवर्धनः।। ८२

अमृतः शाश्वतः साध्यः सिद्धिदः सुमनोहरः ।
खलुब्रह्मखलुस्थानो मुनीनां परमगतिः।। ८३

उपद्रष्टा तथा श्रेष्ठः शुचिभूतो ह्यनामयः ।
वेदसिद्धान्तवेद्यश्च मानसाह्लादवर्धनः ।। ८४

देहादन्यो गुणादन्यो लोकादन्यो विवेकवित् ।
दुष्टस्वप्नहरश्चैव गुरुर्गुरुवरोत्तमः ।। ८५

कर्मी कर्मविनिर्मुक्तः संन्यासी साधकेश्वरः ।
सर्वभावविहीनश्च तृष्णासङ्गनिवारकः ।। ८६

त्यागी त्यागवपुस्त्यागस्त्यागदानविवर्जितः ।
त्यागकारणत्यागात्मा सद्गुरुः सुखदायकः ।। ८७

दक्षो दक्षादिवन्द्यश्च ज्ञानवादप्रवर्तकः ।
शब्दब्रह्ममयात्मा च शब्दब्रह्मप्रकाशवान् ।। ८८

ग्रसिष्णुः प्रभविष्णुश्च सहिष्णुर्विगतान्तरः ।
विद्वत्तमो महावन्द्यो विशालोत्तमवाङ्मुनिः।। ८९

ब्रह्मविद् ब्रह्मभावश्च ब्रह्मर्षिर्ब्राह्मणप्रियः ।
ब्रह्म ब्रह्मप्रकाशात्मा ब्रह्मविद्याप्रकाशनः ।। ९०

अत्रिवंशप्रभूतात्मा तापसोत्तमवन्दितः ।
आत्मवासी विधेयात्मा ह्यत्रिवंशविवर्धनः ।। ९१

प्रवर्तनो निवृत्तात्मा प्रलयोदकसन्निभः ।
नारायणो महागर्भो भार्गवप्रियकृत्तमः ।। ९२

सङ्कल्पदुःखदलनः संसारतमनाशनः ।
त्रिविक्रमस्त्रिधाकारस्त्रिमूर्तिस्त्रिगुणात्मकः ।। ९३

भेदत्रयहरश्चैव तापत्रयनिवारकः ।
दोषत्रयविभेदी च संशयार्णवखण्डनः ।। ९४

असंशयस्त्वसंमूढो ह्यवादी राजवन्दितः ।
राजयोगी महायोगी स्वभावगलितस्तथा ।। ९५

पुण्यश्लोकः पवित्राङ्घ्रिर्ध्यानयोगपरायणः ।
ध्यानस्थो ध्यानगम्यश्च विधेयात्मा पुरातनः ।। ९६

अविज्ञेयो ह्यन्तरात्मा मुख्यबिम्बसनातनः ।
जीवसञ्जीवनो जीवश्चिद्विलासश्चिदाश्रयः ।। ९७

महेन्द्रोऽमरमान्यश्च योगेन्द्रो योगवित्तमः ।
योगधर्मस्तथा योगस्तत्त्वस्तत्त्वविनिश्चयः ।। ९८

नैकबाहुरनन्तात्मा नैकनामपराक्रमः ।
नैकाक्षी नैकपादश्च नाथनाथोत्तमोत्तमः ।। ९९

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
सहस्ररूपदृक् चैव सहस्रारमयोद्भवः।। १००

त्रिपादपुरुषश्चैव त्रिपादूर्ध्वस्तथैव च ।
त्र्यम्बकश्च महावीर्यो योगवीर्यविशारदः ।। १०१

विजयी विनयी जेता वीतरागी विराजितः ।
रुद्रो रौद्रो महाभीमः प्राज्ञमुख्यः सदाशुचिः ।। १०२

अन्तर्ज्योतिरनन्तात्मा प्रत्यगात्मा निरन्तरः ।
अरूप आत्मरूपश्च सर्वभावविनिर्वृतः ।। १०३

अन्तःशून्यो बहिःशून्यः शून्यात्मा शून्यभावनः ।
अन्तःपूर्णो बहिःपूर्णः पूर्णात्मा पूर्णभावनः ।। १०४

अन्तस्त्यागी बहिस्त्यागी त्यागात्मा सर्वयोगवान् ।
अन्तर्योगी बहिर्योगी सर्वयोगपरायणः ।। १०५

अन्तर्भोगी बहिर्भोगी सर्वभोगविदुत्तमः ।
अन्तर्निष्ठो बहिर्निष्ठः सर्वनिष्ठामयस्तथा ।। १०६

बाह्यान्तरविमुक्तश्च बाह्यान्तरविवर्जितः ।
शान्तः शुद्धो विशुद्धश्च निर्वाणः प्रकृतेः परः ।।१०७

अकालः कालनेमी च कालकालो जनेश्वरः ।
कालात्मा कालकर्ता च कालज्ञः कालनाशनः ।। १०८

कैवल्यपददाता च कैवल्यसुखदायकः ।
कैवल्यकलनाधारो निर्भरो हर्षवर्धनः ।। १०९

हृदयस्थो हृषीकेशो गोविन्दो गर्भवर्जितः ।
सकलागमपूज्यश्च निगमो निगमाश्रयः ।। ११०

पराशक्तिः पराकीर्तिः परावृत्तिर्निधिस्मृतिः ।
परविद्या परा क्षान्तिर्विभक्तिर्युक्तसद्गतिः ।। १११

स्वप्रकाशः प्रकाशात्मा परसंवेदनात्मकः ।
स्वसेव्यः स्वविदां स्वात्मा स्वसंवेद्योऽनघः क्षमी ।। ११२

स्वानुसन्धानशीलात्मा स्वानुसन्धानगोचरः ।
स्वानुसन्धानशून्यात्मा स्वानुसन्धानाश्रयस्तथा ।। ११३

स्वबोधदर्पणोऽभङ्गः कन्दर्पकुलनाशनः ।
ब्रह्मचारी ब्रह्मवेत्ता ब्राह्मणो ब्रह्मवित्तमः ।। ११४

तत्त्वबोधः सुधावर्षः पावनः पापपावकः ।
ब्रह्मसूत्रविधेयात्मा ब्रह्मसूत्रार्थनिर्णयः ।। ११५

आत्यन्तिको महाकल्पः सङ्कल्पावर्तनाशनः ।
आधिव्याधिहरश्चैव संशयार्णवशोषकः ।। ११६

तत्त्वात्मज्ञानसन्देशो महानुभवभावितः ।
आत्मानुभवसम्पन्नः स्वानुभावसुखाश्रयः ।। ११७

अचिन्त्यश्च बृहद्भानुः प्रमदोत्कर्षनाशनः ।
अनिकेतप्रशान्तात्मा शून्यवासो जगद्वपुः ।। ११८

चिद्गतिश्चिन्मयश्चक्री मायाचक्रप्रवर्तकः ।
सर्ववर्णविदारम्भी सर्वारम्भपरायणः ।। ११९

पुराणः प्रवरो दाता सुन्दरः कनकाङ्गदी ।
अनसूयात्मजो दत्तः सर्वज्ञः सर्वकामदः ।। १२०

कामजित् कामपालश्च कामी कामप्रदागमः ।
कामवान् कामपोषश्च सर्वकामनिवर्तकः ।। १२१

सर्वकर्मफलोत्पत्तिः सर्वकामफलप्रदः ।
सर्वकर्मफलैः पूज्यः सर्वकर्मफलाश्रयः ।। १२२

विश्वकर्मा कृतात्मा च कृतज्ञः सर्वसाक्षिकः ।
सर्वारम्भपरित्यागी जडोन्मत्तपिशाचवान् ।। १२३

भिक्षुर्भिक्षाकरश्चैव भैक्षाहारी निराश्रमी ।
अकूलश्चानुकूलश्च विकलो ह्यकलस्तथा ।। १२४

जटिलो वनचारी च दण्डी मुण्डी च गण्डवान् ।
देहधर्मविहीनात्मा ह्येकाकी सङ्गवर्जितः ।। १२५

आश्रम्यनाश्रमारम्भोऽनाचारी कर्मवर्जितः ।
असन्देही च सन्देही न किञ्चिन्न च किञ्चनः ॥ १२६

नृदेही देहशून्यश्च नाभावी भावनिर्गतः ।
नाब्रह्म च परब्रह्म स्वयमेव निराकुलः ॥ १२७

अनघश्चागुरुश्चैव नाथनाथोत्तमो गुरुः ।
द्विभुजः प्राकृतश्चैव जनकश्च पितामहः ॥ १२८

अनात्मा न च नानात्मा नीतिर्नीतिमतां वरः ।
सहजः सदृशः सिद्ध एकश्चिन्मात्र एव च ॥ १२९

न कर्तापि च कर्ता च भोक्ता भोगविवर्जितः ।
तुरीयस्तुरीयातीतः स्वच्छः सर्वमयस्तथा ॥ १३०

सर्वाधिष्ठानरूपश्च सर्वध्येयविवर्जितः।
सर्वलोकनिवासात्मा सकलोत्तमवन्दितः ॥ १३१

देहभृद्देहकृच्चैव देहात्मा देहभावनः ।
देही देहविभक्तश्च देहभावप्रकाशनः ॥ १३२

लयस्थो लयविच्चैव लयाभावश्च बोधवान् ।
लयातीतो लयस्यान्तो लयभावनिवारणः ॥ १३३

विमुखः प्रमुखश्चैव प्रत्यङ्मुखवदाचरी ।
विश्वभुक् विश्वधृग् विश्वो विश्वक्षेमकरस्तथा ॥ १३४

अविक्षिप्तोऽप्रमादी च परर्द्धिः परमार्थदृक् ।
स्वानुभावविहीनश्च स्वानुभावप्रकाशनः ॥ १३५

निरिन्द्रियश्च निर्बुद्धिर्निराभासो निराकृतः ।
निरहङ्काररूपात्मा निर्वपुः सकलाश्रयः ॥ १३६

शोकदुःखहरश्चैव भोगमोक्षफलप्रदः ।
सुप्रसन्नस्तथा सूक्ष्मः शब्दब्रह्मार्थसङ्ग्रहः ॥ १३७

आगमापायशून्यश्च स्थानदश्च सताङ्गतिः ।
अकृतः सुकृतश्चैव कृतकर्मा विनिर्वृतः ॥ १३८
भेदत्रयहरश्चैव देहत्रयविनिर्गतः ।
सर्वकाममयश्चैव सर्वकामनिवर्तकः ॥ १३९

सिद्धेश्वरोऽजरः पञ्चबाणदर्पहुताशनः ।
चतुरक्षरबीजात्मा स्वभूश्चित्कीर्तिभूषणः ॥ १४०

अगाधबुद्धिरक्षुब्धश्चन्द्रसूर्याग्निलोचनः ।
यमदंष्ट्रोऽतिसंहर्ता परमानन्दसागरः ॥ १४१

लीलाविश्वम्भरो भानुर्भैरवो भीमलोचनः ।
ब्रह्मचर्याम्बरः कालस्त्वचलश्चलनान्तकः ॥ १४२

आदिदेवो जगद्योनिर्वासवारिविमर्दनः ।
विकर्मकर्मकर्मज्ञोऽनन्यगमकोऽगमः ॥ १४३

अबद्धकर्मशून्यश्च कामरागकुलक्षयः ।
योगान्धकारमथनः पद्मजन्मादिवन्दितः ॥ १४४

भक्तकामोऽग्रजश्चक्री भावनिर्भावभावकः ।
भेदान्तको महानग्र्यो निगूहो गोचरान्तकः ॥ १४५

कालाग्निशमनः शङ्खचक्रपद्मगदाधरः ।
दीप्तो दीनपतिः शास्ता स्वच्छन्दो मुक्तिदायकः ॥ १४६

व्योमधर्माम्बरो भेत्ता भस्मधारी धराधरः ।
धर्मगुप्तोऽन्वयात्मा च व्यतिरेकार्थनिर्णयः ॥ १४७

एकानेकगुणाभ्यासाभासनिर्भासवर्जितः ।
भावाभावस्वभावात्मा भावाभावविभाववित् ।। १४८

योगिहृदयविश्रामोऽनन्तविद्याविवर्धनः ।
विघ्नान्तकस्त्रिकालज्ञस्तत्त्वात्मा ज्ञानसागरः ।। १४९

इतीदं दत्तसाहस्रं सायं प्रातः पठेत्तु यः ।
स इहामुत्र लभते निर्वाणं परमं सुखम् ।। १५०

गुरुवारे दत्तभक्तो भक्तिभावसमन्वितः ।
पठेत्सदैव यो ह्येतत्स लभेच्चिन्तितं ध्रुवम् ।। १५१

*इति श्रीमद्दत्तात्रेयपुराणोक्तं*
*श्रीमद्दत्तात्रेयसहस्रनामस्तोत्रं सम्पूर्णम् ।*



।। ॐ नमः श्री अवधूताय नमः ।

# ११. श्रीदत्तात्रेयसहस्रनामावलिः

दत्तात्रेयस्वरूपाय सच्चिदानन्दरूपिणे ।
नमोऽस्तु भक्तवात्सल्यप्रवणाय नमो नमः ।।

जराजन्मविनाशाय देहशुद्धिकराय च ।
दिगम्बर ! दयामूर्ते ! दत्तात्रेय ! नमोऽस्तु ते ।।

ओं श्रीदत्तात्रेयाय नमः । महायोगिने । योगेशाय । अमरप्रभवे । मुनये । दिगम्बराय । बालाय । मायामुक्ताय । मदापहाय । अवधूताय । महानाथाय । शङ्कराय । अमरवल्लभाय । महादेवाय । आदिदेवाय ।पुराणप्रभवे । ईश्वराय । सत्त्वकृते । सत्त्वभृते । भावाय नमः । २०

ओं सत्त्वात्मने नमः । सत्त्वसागराय । सत्त्वविदे । सत्त्वसाक्षिणे । सत्त्वसाध्याय । अमराधिपाय । भूतकृते । भूतभृते । भूतात्मने । भूतसम्भवाय । भूतभावाय । भवाय । भूतविदे । भूतकारणाय । भूतसाक्षिणे । प्रभूतये । भूतानां परमायै गतये । भूतसङ्गविहीनात्मने । भूतात्मने । भूतशङ्कराय नमः ।४०

ओं भूतनाथाय नमः । महानाथाय । आदिनाथाय । महेश्वराय । सर्वभूतनिवासात्मने । भूतसन्तापनाशनाय । सर्वात्मने । सर्वभृते । सर्वाय । सर्वज्ञाय । सर्वनिर्णयाय । सर्वसाक्षिणे । बृहद्भानवे । सर्वविदे । सर्वमङ्गलाय । शान्ताय । सत्याय । समाय । पूर्णाय । एकाकिने नमः । ६०

ओं कमलापतये नमः । रामाय । रामप्रियाय । विरामाय । रामकारणाय । शुद्धात्मने । पावनाय । अनन्ताय । प्रतीताय । परमार्थभृते ।हंससाक्षिणे । विभवे । प्रभवे । प्रलयाय । सिद्धात्मने । परमात्मने । सिद्धानां परमायै गतये । सिद्धिसिद्धाय । साध्याय । साधनाय नमः । ८०

ओं उत्तमाय नमः । सुलक्षणाय । सुमेधाविने । विद्यावते । विगतान्तराय । विज्वराय । महाबाहवे । बहुलानन्दवर्धनाय । अव्यक्तपुरुषाय । प्राज्ञाय । परज्ञाय । परमार्थदृशे । परापरविनिर्मुक्ताय । युक्ताय । तत्त्वप्रकाशवते । दयावते । भगवते । भाविने । भावात्मने । भावकारणाय नमः । १००

ओं भवसन्तापनाशाय नमः । पुष्पवते । पण्डिताय । बुधाय । प्रत्यक्षवस्तवे । विश्वात्मने । प्रत्यग्ब्रह्मसनातनाय । प्रमाण-विगताय । प्रत्याहारनियोजकाय । प्रणवाय । प्रणवातीताय । प्रमुखाय । प्रलयात्मकाय । मृत्युञ्जयाय ।

विविक्तात्मने । शङ्करात्मने । परस्मै वपुषे । परमाय । तनुविज्ञेयाय । परमात्मनि संस्थिताय नमः । १२०

ओं प्रबोधकलनाधाराय नमः । प्रभावप्रवरोत्तमाय । चिदम्बराय । चिद्विलासाय । चिदाकाशाय । चिदुत्तमाय । चित्तचैतन्यचित्तात्मने । देवानां परमायै गतये । अचेत्याय । चेतनाधाराय । चेतनाचित्तविक्रमाय । चित्तात्मने । चेतनारूपाय । लसत्पङ्कजलोचनाय । परब्रह्मणे । परस्मैज्योतिषे । परस्मै धाम्ने । परस्मै तपसे । परस्मै सूत्राय । परतन्त्राय नमः । १४०

ओं पवित्राय नमः । परमोह्वते । क्षेत्राय । क्षेत्रगाय । क्षेत्राय । क्षेत्राधाराय । पुरञ्जनाय । क्षेत्रशून्याय । लोकसाक्षिणे । क्षेत्रवते । बहुनायकाय । योगेन्द्राय । योगपूज्याय । योग्याय । आत्मविदां शुचये । योगमायाधराय । स्थाणवे । अचलाय । कमलापतये । योगेशाय नमः । १६०

ओं योगनिर्मात्रे नमः । योगज्ञानप्रकाशनाय । योगपालाय । लोकपालाय । संसारतमनाशनाय । गुह्याय । गुह्यतमाय । गुप्तये । मुक्ताय । युक्ताय । सनातनाय । गहनाय । गगनाकाराय । गंभीराय । गणनायकाय । गोविन्दाय । गोपतये । गोप्त्रे । गोभागाय । भावसंस्थिताय नमः । १८०

ओं गोसाक्षिणे नमः । गोतमारये । गान्धाराय । गगनाकृतये । योगयुक्ताय । भोगयुक्ताय ।शङ्कामुक्तसमाधिमते । सहजाय । सकलेशानाय । कार्तवीर्यवरप्रदाय । सरजसे । विरजसे । पुंसे । पावनाय । पापनाशनाय । परावरविनिर्मुक्ताय । परस्मैज्योतिषे । पुरातनाय । नानाज्योतिषे । अनेकात्मने नमः ।

ओं स्वयञ्ज्योतिषे नमः । सदाशिवाय । दिव्यज्योतिर्मयाय । सत्यविज्ञानभास्कराय । नित्यशुद्धाय । पराय । पूर्णाय । प्रकाशाय । प्रकटोद्भवाय । प्रमादविगताय । परेशाय । परविक्रमाय । योगिने । योगाय । योगपाय । योगाभ्यासप्रकाशनाय । योक्त्रे । मोक्त्रे । विधात्रे । त्रात्रे नमः । २२०

ओं पात्रे नमः । निरायुधाय । नित्यमुक्ताय । नित्ययुक्ताय । सत्याय । सत्यपराक्रमाय । सत्त्वशुद्धिकराय । सत्त्वाय । सत्त्वभृताङ्गतये । श्रीधराय । श्रीवपुषे । श्रीमते । श्रीनिवासाय । अमरार्चिताय । श्रीनिधये । श्रीपतये । श्रेष्ठाय । श्रेयस्काय । चरमाश्रयाय । त्यागिने नमः । २४०

ओं त्यागार्थसम्पन्नाय नमः । त्यागात्मने । त्यागविग्रहाय । त्यागलक्षणसिद्धात्मने । त्यागज्ञाय । त्यागकारणाय । भोगाय । भोक्त्रे । भोग्याय । भोगसाधनकारणाय । भोगिने । भोगार्थसम्पन्नाय । भोगज्ञानप्रकाशनाय । केवलाय । केशवाय । कृष्णाय । कम्वाससे । कमलालयाय । कमलासनपूज्याय । हरये नमः । २६०

ओं अज्ञानखण्डनाय । महात्मने । महदादये । महेशोत्तमवन्दिताय । मनोबुद्धिविहीनात्मने । मानात्मने । मानवाधिपाय । भुवनेशाय । विभूतये । धृतये । मेधायै । स्मृतये । दयायै । दुःखदावानलाय । बुद्धाय । प्रबुद्धाय । परमेश्वराय । कामघ्ने । क्रोधघ्ने । दम्भदर्पमदापहाय नमः । २८०

ओं अज्ञानतिमिरारये नमः । भवारये । भुवनेश्वराय । रूपकृते । रूपभृते । रूपिणे । रूपात्मने । रूपकारणाय । रूपज्ञाय । रूपसाक्षिणे । नामरूपाय । गुणान्तकाय । अप्र-

मेयाय। प्रमेयाय। प्रमाणाय। प्रणवाश्रयाय। प्रमाणरहिताय। अचिन्त्याय। चेतनाविगताय। अजराय नमः। ३००

ओं अक्षराय नमः। अक्षरमुक्ताय। विज्वराय। ज्वरनाशानाय। विशिष्टाय। वित्तशास्त्रिणे। दृष्टाय। दृष्टान्तवर्जिताय। गुणेशाय। गुणकायाय। गुणात्मने। गुणभावनाय। अनन्तगुणसम्पन्नाय। गुणगर्भाय। गुणाधिपाय। गणेशाय। गुणनाथाय। गुणात्मने। गणभावनाय। गणबन्धवे नमः। ३२०

ओं विवेकात्मने नमः। गुणयुक्ताय। पराक्रमिणे। अतर्क्याय। क्रतवे। अग्नये। कृतज्ञाय। सफलाश्रयाय। यज्ञाय। यज्ञफलदाय। यज्ञाय। इज्याय। अमरोत्तमाय। हिरण्यगर्भाय। श्रीगर्भाय। खगर्भाय। कुणपेश्वराय। मायागर्भाय। लोकगर्भाय। स्वयम्भुवे नमः। ३४०

ओं भुवनान्तकाय। निष्पापाय। निबिडाय। नन्दिने। बोधिने। बोधसमाश्रयाय। बोधात्मने। बोधनात्मने। भेदवैतण्डखण्डनाय। स्वाभाव्याय। भावनिर्मुक्ताय। व्यक्ताय। अव्यक्तसमाश्रयाय। नित्यतृप्ताय। निराभासाय। निर्वाणाय। शरणाय। सुहृदे। गुह्येशाय। गुणम्भीराय नमः ३६०

ओं गुणदोषनिवारणाय नमः। गुणसङ्गविहीनाय। योगारेर्दर्पनाशनाय। आनन्दाय। परमानन्दाय। स्वानन्दसुखवर्धनाय। सत्यानन्दाय। चिदानन्दाय। सर्वानन्दपरायणाय। सद्रूपाय। सहजाय। सत्याय। स्वानन्दाय। सुमनोहराय। सर्वाय। सर्वान्तराय। पूर्वात्पूर्वतराय। खमयाय। खपराय। खादये नमः। ३८०

ओं खम्ब्रह्मणे नमः । खतनवे । खगाय । खवाससे । खविहीनाय । खनिधये । खपराश्रयाय । अनन्ताय । आदिरूपाय । सूर्यमण्डल-मध्यगाय । अमोघाय । परमामोघाय । परोक्षाय । परदाय । कवये । विश्वचक्षुषे । विश्वसाक्षिणे। विश्वबाहवे। धनेश्वराय। धनञ्जयाय नमः। ४००

ओं महातेजसे। तेजिष्ठाय। तैजसाय। सुखिने। ज्योतिषे। ज्योतिर्मयाय। जेत्रे। ज्योतिषां ज्योतिरात्मकाय। ज्योतिषामपि ज्योतिषे। जनकाय। जनमोहनाय। जितेन्द्रियाय। जितक्रोधाय। जितात्मने । जितमानसाय । जितसङ्गाय । जितप्राणाय । जितसंसारवासनाय। निर्वासनाय। निरालम्बाय नमः । ४२०

ओं निर्योगक्षेम-वर्जिताय नमः। निरीहाय। निरहङ्काराय। निराशिषे निरुपाधिकाय । नित्यबोधाय । विविक्तात्मने । विशुद्धोत्तमगौरवाय । विद्यार्थिने । परमार्थिने । श्रद्धार्थिने । साधनात्मकाय । प्रत्याहारिणे । निराहारिणे । सर्वाहार-परायणाय। नित्यशुद्धाय। निराकाङ्क्षिणे। पारायणपरायणाय। अणोरणुतराय। सूक्ष्माय। स्थूलाय नमः। ४४०

ओं स्थूलतराय नमः। एकाय। अनेकरूपाय। विश्वरूपाय। सनातनाय । नैकरूपाय । विरूपात्मने । नैकबोधमयाय । नैकनाममयाय। नैकविद्याविवर्धनाय। एकाय। एकान्तिकाय। नानाभाव-विवर्जिताय। एकाक्षराय। बीजाय। पूर्णबिम्बाय। सनातनाय । मन्त्रवीर्याय । मन्त्रबीजाय । शास्त्र-वीर्याय नमः। ४६०

ओं जगत्पतये नमः । नानावीर्यधराय । शक्रेशाय । पृथिवीपतये । प्राणेशाय । प्राणदाय । प्राणाय । प्राणायामपरायणाय । प्राणपञ्चकनिर्मुक्ताय । कोश-पञ्चकवर्जिताय । निश्चलाय । निष्कलाय । असङ्गाय । निष्प्रपञ्चाय । निरामयाय । निराधाराय । निराकाराय । निर्विकाराय । निरञ्जनाय । निष्प्रतीताय नमः । ४८०

ओं निराभासाय नमः । निरासक्ताय । निराकुलाय । निष्ठासर्वगताय । निरारम्भाय । निराश्रयाय । निरन्तराय । सर्व गोप्त्रे । शान्ताय । दान्ताय । महामुनये । निःशब्दाय । सुकृताय । स्वस्थाय । सत्यवादिने । सुरेश्वराय । ज्ञानदाय । ज्ञानविज्ञानिने । ज्ञानात्मने । आनन्दपूरिताय नमः । ५००

ओं ज्ञानयज्ञविदां दक्षाय नमः । ज्ञानाग्नये । ज्वलनाय । बुधाय । दयावते । भवरोगारये । चिकित्साचरमागतये । चन्द्रमण्डल-मध्यस्थाय । चन्द्रकोटिसुशीतलाय । यन्त्रकृते । परमाय । यन्त्रिणे । यन्त्रारूढपराजिताय । यन्त्रविदे । यन्त्रवासाय । यन्त्राधाराय । धराधराय । तत्त्वज्ञाय । तत्त्वभूतात्मने । महत्तत्त्वप्रकाशनाय नमः । ५२०

ओं तत्त्वसंख्यानयोगज्ञाय नमः । सांख्यशास्त्रप्रवर्तकाय । अनन्तविक्रमाय । देवाय । माधवाय । धनेश्वराय । साधवे । साधुवरिष्ठात्मने । सावधानाय । अमरोत्तमाय । निःसङ्कल्पाय । निराधाराय । दुर्धराय । आत्मविदे । पतये । आरोग्यसुखदाय । प्रवराय । वासवाय । परेशाय । परमोदाराय नमः । ५४०

ओं प्रत्यक्चैतन्यदुर्गमाय नमः । दुराधर्षाय । दुरावासाय । दूरत्वपरिनाशनाय । वेदविदे । वेदकृते । वेदाय । वेदात्मने ।

विमलाशयाय । विविक्तसेविने । संसारश्रमनाशनाय । ब्रह्मयोनये । बृहद्योनये । विश्वयोनये । विदेहवते । विशालाक्षाय । विश्वनाथाय । हाटकाङ्गदभूषणाय । अबाध्याय । जगदाराध्याय नमः । ५६०

ओं जगदार्जवपालनाय नमः । जनवते । धनवते । धर्मिणे । धर्मगाय । धर्मवर्धनाय । अमृताय । शाश्वताय । साध्याय । सिद्धिदाय । सुमनोहराय । खलुब्रह्मखलुस्थानाय । मुनीनां परमायै गतये । उपद्रष्ट्रे । श्रेष्ठाय । शुचिभूताय । अनामयाय । वेदसिद्धान्तवेद्याय । मानसाह्लाद वर्धनाय । देहादन्याय नमः ५८०

ओं गुणादन्याय नमः । लोकादन्याय । विवेकविदे । दुष्टस्वप्नहराय । गुरवे । गुरुवरोत्तमाय । कर्मिणे । कर्मविनिर्मुक्ताय । संन्यासिने । साधकेश्वराय । सर्वभावविहीनाय । तृष्णासङ्ग-निवारकाय । त्यागिने । त्यागवपुषे । त्यागाय । त्यागदान-विवर्जिताय । त्यागकारणत्यागात्मने । सद्गुरवे । सुखदायकाय । दक्षाय नमः। ६००

ओं दक्षादिवन्द्याय नमः । ज्ञानवादप्रवर्तकाय । शब्दब्रह्ममयात्मने । शब्दब्रह्मप्रकाशवते । ग्रसिष्णवे । सहिष्णवे । विगतान्तराय । विद्वत्तमाय । महावन्द्याय । विशालोत्तमवाचे मुनये । ब्रह्मविदे । ब्रह्मभावाय । ब्रह्मर्षये । ब्राह्मणप्रियाय । ब्रह्मणे । ब्रह्मप्रकाशात्मने । ब्रह्मविद्याप्रकाशनाय । अत्रिवंशप्रभूतात्मने । तापसोत्तमवन्दिताय नमः । ६२०

ओं आत्मवासिने नमः । विधेयात्मने । अत्रिवंशविवर्धनाय । प्रवर्तनाय । निवृत्तात्मने । प्रलयोदकसन्निभाय । नारायणाय । महागर्भाय । भार्गवप्रिय-कृत्तमाय । सङ्कल्पदुःखदलनाय । संसारतमनाशनाय । त्रिविक्रमाय । त्रिधाकाराय । त्रिमूर्तये । त्रिगुणात्मकाय । भेदत्रयहराय । तापत्रयनिवारणाय । दोषत्रय-विभेदिने । संशयार्णवखण्डनाय । असंशयाय नमः । ६४०

ओं असम्मूढाय नमः । अवादिने । राजवन्दिताय । राजयोगिने । महायोगिने । स्वभावगलिताय । पुण्यश्लोकाय । पवित्राङ्घ्रये । ध्यानयोगपरायणाय । ध्यानस्थाय । ध्यानगम्याय । विधेयात्मने । पुरातनाय । अविज्ञेयाय । अन्तरात्मने । मुख्यबिम्ब-सनातनाय । जीवसञ्जीवनाय । जीवाय । चिद्विलासाय । चिदाश्रयाय नम । ६६०

ओं महेन्द्राय नमः । अमरमान्याय । योगेन्द्राय । योगवित्तमाय । योगधर्माय । योगाय । तत्त्वाय । तत्त्वविनिश्चयाय । नैकबाहवे । अनन्तात्मने । नैकनाम-पराक्रमाय । नैकाक्षिणे । नैकपादाय । नाथनाथाय । उत्तमोत्तमाय । सहस्रशीर्ष्णे । पुरुषाय । सहस्राक्षाय । सहस्रपदे । सहस्ररूपदृशे नमः । ६८०

ओं सहस्रारमयोद्भवाय नमः । त्रिपादपुरुषाय । त्रिपा-दूर्ध्वाय । त्र्यम्बकाय । महावीर्याय । योगवीर्यविशारदाय । विजयिने । विनयिने । जेत्रे । वीतरागिणे । विराजिताय । रुद्राय । रौद्राय । महाभीमाय । प्राज्ञमुख्याय । सदाशुचये । अन्तर्ज्योतिषे । अनन्तात्मने । प्रत्यगात्मने । निरन्त-राय नमः। ७००

ओं अरूपाय नमः । आत्मरूपाय । सर्वभावविनिर्वृताय । अन्तःशून्याय । बहिःशून्याय । शून्यात्मने । शून्यभावनाय । अन्तःपूर्णाय । बहिःपूर्णाय । पूर्णात्मने । पूर्णभावनाय । अन्तस्त्यागिने । बहिस्त्यागिने । त्यागात्मने । सर्वयोगवते । अन्तर्योगिने । बहिर्योगिने । सर्वयोगपरायणाय । अन्तर्भोगिने । बहिर्भोगिने नमः । ७२०

ओं सर्वभोगविदुत्तमाय । अन्तर्निष्ठाय । बहिर्निष्ठाय । सर्वनिष्ठामयाय । बाह्यान्तरविमुक्ताय । बाह्यान्तरविवर्जिताय । शान्ताय । शुद्धाय । विशुद्धाय । निर्वाणाय । प्रकृतेः पराय । अकालाय । कालनेमिने । कालकालाय । जनेश्वराय । कालात्मने । कालकर्त्रे । कालज्ञाय । कालनाशनाय । कैवल्यपददात्रे नमः । ७४०

ओं कैवल्यसुखदायकाय नमः । कैवल्यकलनाधाराय । निर्भराय । हर्षवर्धनाय । हृदयस्थाय हृषीकेशाय । गोविन्दाय । गर्भवर्जिताय । सकलागमपूज्याय । निगमाय । निगमाश्रयाय । परायै शक्तये । परायै कीर्तये । परायै वृत्तये । निधिस्मृतये । परविद्यायै । परायै क्षान्तये । विभक्तये । युक्तसद्गतये । स्वप्रकाशाय । प्रकाशात्मने नमः । ७६०

ओं परसंवेदनात्मकाय नमः । स्वसेव्याय । स्वविदां स्वात्मने । स्वसंवेद्याय । अनघाय । क्षमिणे । स्वानुसन्धानशीलात्मने । स्वानुसन्धानगोचराय । स्वानुसन्धानशून्यात्मने । स्वानुसन्धानाश्रयाय । स्वबोधदर्पणाय । अभङ्गाय । कन्दर्पकुलनाशनाय । ब्रह्मचारिणे । ब्रह्मवेत्रे । ब्राह्मणाय । ब्रह्मवित्तमाय । तत्त्वबोधाय । सुधावर्षाय । पावनाय नमः । ७८०

ओं पापपावकाय । ब्रह्मसूत्रविधेयात्मने । ब्रह्मसूत्रार्थ-निर्णयाय। आत्यन्तिकाय। महाकल्पाय। सङ्कल्पावर्तनाशनाय। आधिव्याधिहराय । संशयार्णवशोषकाय । तत्त्वात्मज्ञान-सन्देशाय । महानुभवभाविताय । आत्मानुभवसम्पन्नाय । स्वानुभावसुखाश्रयाय । अचिन्त्याय । बृहद्भानवे । प्रमदोत्कर्षनाशनाय । अनिकेतप्रशान्तात्मने । शून्यावासाय । जगद्वपुषे। चिद्गतये। चिन्मयाय नमः । ८००

ओं चक्रिणे नमः । मायाचक्रप्रवर्तकाय । सर्ववर्णविदारम्भिणे। सर्वारम्भपरायणाय। पुराणाय। प्रवराय। दात्रे । सुन्दराय । कनकाङ्गदिने । अनसूयात्मजाय । दत्ताय । सर्वज्ञाय । सर्वकामदाय । कामजिते । कामपालाय । कामिने । कामप्रदागमाय । कामवते । कामपोषाय । सर्वकामनिवर्तकाय नमः । ८२०

ओं सर्वकर्मफलोत्पत्तये नमः । सर्वकामफलप्रदाय । सर्वकर्मफलैः पूज्याय । सर्वकर्मफलाश्रयाय । विश्वकर्मणे । कृतात्मने । कृतज्ञाय । सर्वसाक्षिकाय । सर्वारम्भपरित्यागिने । जडोन्मत्तपिशाचवते । भिक्षवे । भिक्षाकराय । भैक्षाहारिणे । निराश्रमिणे । अकूलाय । अनुकूलाय । विकलाय । अकलाय । जटिलाय । वनचारिणे नमः । ८४०

ओं दण्डिने नमः । मुण्डिने । गण्डिने । देहधर्मविहीनात्मने । एकाकिने । सङ्गवर्जिताय । आश्रमिणे । अनाश्रमारम्भाय । अनाचारिणे । कर्मवर्जिताय । असन्देहिने । सन्देहिने । न किञ्चिन्न च किञ्चनाय । नृदेहिने । देहशून्याय । नाभाविने । भावनिर्गताय । नाब्रह्मणे । परब्रह्मणे । स्वयमेव निराकुलाय नमः । ८६०

ओं अनघाय नमः । अगुरवे । नाथनाथोत्तमाय । गुरवे । द्विभुजाय । प्राकृताय । जनकाय । पितामहाय । अनात्मने । न च नानात्मने । नीतये । नीतिमतां वराय । सहजाय । सद्दशाय । सिद्धाय । एकाय । चिन्मात्राय । न कर्त्रे । कर्त्रे । भोक्त्रे नमः । ८८०

ओं भोगविवर्जिताय नमः । तुरीयाय । तुरीयातीताय । स्वच्छाय । सर्वमयाय । सर्वाधिष्ठानरूपाय । सर्वध्येय-विवर्जिताय । सर्वलोकनिवासात्मने । सकलोत्तमवन्दिताय । देहभृते । देहकृते । देहात्मने । देहभावनाय । देहिने । देहविभक्ताय । देहभावप्रकाशनाय । लयस्थाय । लयविदे । लयाभावाय । बोधवते नमः । ९००

ओं लयातीताय नमः । लयस्यान्ताय । लयभाव-निवारणाय । विमुखाय । प्रमुखाय । प्रत्यङ्मुखवदाचरिणे । विश्वभुजे । विश्वधृषे । विश्वाय । विश्वक्षेमकराय । अविक्षिप्ताय । अप्रमादिने । परर्धये । परमार्थदृशे । स्वानुभावविहीनाय । स्वानुभावप्रकाशनाय । निरिन्द्रियाय । निर्बुद्धये । निराभासाय । निराकृताय नमः । ९२०

ओं निरहङ्काररूपात्मने नमः । निर्वपुषे । सकलाश्रयाय । शोकदुःखहराय । भोगमोक्षफलप्रदाय । सुप्रसन्नाय । सूक्ष्माय । शब्दब्रह्मार्थसङ्ग्रहाय । आगमापायशून्याय । स्थानदाय । सताङ्गतये । अकृताय । सुकृताय । कृतकर्मणे । विनिर्वृताय । भेदत्रय-हराय । देहत्रयविनिर्गताय । सर्वकाममयाय । सर्वकामनिवर्तकाय । सिद्धेश्वराय नमः । ९४०

ओं अजराय नमः । पञ्चबाणदर्पहुताशनाय । चतुरक्षर-बीजात्मने । स्वभुवे । चित्कीर्तिभूषणाय । अगाधबुद्धये । अक्षुब्धाय । चन्द्रसूर्याग्निलोचनाय । यमदंष्ट्राय । अतिसंहर्त्रे । परमानन्दसागराय । लीलाविश्वम्भराय । भानवे । भैरवाय । भीमलेचनाय । ब्रह्मचर्याम्बराय । कालाय । अचलाय । चलनान्तकाय । आदिदेवाय नमः । ९६०

ओं जगद्योनये नमः । वासवारिविमर्दनाय । विकर्मकर्मकर्मज्ञाय । अनन्यगमकाय । अगमाय । अबद्धकर्म-शून्याय । कामरागकुलक्षयाय । योगान्धकारमथनाय । पद्मजन्मादि-वन्दिताय । भक्तकामाय । अग्रजाय । चक्रिणे । भावनिर्भाव-भावकाय । भेदान्तकाय । महते । अग्रयाय । निगूहाय । गोचरान्तकाय । कालाग्निशमनाय । शङ्खचक्र-पद्मगदाधराय नमः । ९८०

ओं दीप्ताय नमः । दीनपतये । शास्त्रे । स्वच्छन्दाय । मुक्तिदायकाय । व्योमधर्माम्बराय । भेत्रे । भस्मधारिणे । धराधराय । धर्मगुप्ताय । अन्वयात्मने । व्यतिरेकार्थनिर्णयाय । एकानेकगुणाभासाभासनिर्भासवर्जिताय । भावाभाव-स्वभावात्मने । भावाभावविभावविदे । योगिहृदयविश्रामाय । अनन्तविद्याविवर्धनाय । विघ्नान्तकाय । त्रिकालज्ञाय । तत्त्वात्मज्ञानसागराय नमः । १०००



# १२.दत्तात्रेयाष्टोत्तरशतनामस्तोत्रम्

ओंकारतत्त्वरूपाय दिव्यज्ञानात्मने नमः ।
नभोऽतीतमहाधाम्ने ऐन्द्यर्द्ध्या ओजसे नमः । १

नष्टमत्सरगम्यायागम्याचारात्मवर्त्मने ।
मोचितामेध्यकृतये ह्रींबीजश्राणितश्रिये ।। २

मोहादिविभ्रमान्ताय बहुकायधराय च ।
भक्तदुर्वैभवच्छेत्त्रे क्लींबीजवरजापिने ।। ३

भवहेतुविनाशाय राजच्छोणाधराय च ।
गतिप्रकम्पिताण्डाय चारुव्यायतबाहवे ।। ४

गतगर्वप्रियायाऽस्तु यमादियतचतसे ।
वशिताजातवश्याय मुण्डिने अनसूयवे ।। ५

वदद्वरेण्यवाग्जालाविस्पष्टविविधात्मने ।
तपोधनप्रसन्नायेडापतिस्तुतकीर्तये ।। ६

तेजोमण्यन्तरङ्गायाऽद्मरसद्मविहापिने ।
आन्तरस्थानसंस्थायायैश्वर्य श्रौतगीतये ।। ७

वातादिभययुग्भावहेतवे हेतुहेतवे ।
जगदात्मात्मभूताय विद्विषत्षट्कघातिने ।। ८

सुरवर्गोद्धृते भूत्या असुरावासभेदिने ।
नेत्रे च नयनाक्ष्णेऽचिच्चेतनाय महात्मने ।। ९

देवाधिदेवदेवाय वसुधासुरपालिने ।
याजिनामग्रगण्याय द्रांबीजजपतुष्टये ।। १०

वासनावनदावाय धूलियुग्देहमालिने ।
यतिसंन्यासिगतये दत्तात्रेयेति संविदे ।। ११

यजनास्यभुजेऽजाय तारकावासगामिने ।
महाजवास्पृग्रूपायाऽत्ताकाराय विरूपिणे ।। १२

नराय धीप्रदीपाय यशस्वियशसे नमः ।
हारिणे चोज्ज्वलाङ्गायात्रेस्तनूजाय शंभवे ।। १३

मोचितामरसङ्घाय धीमतां धीकराय च ।
बलिष्ठविप्रलभ्याय यागहोमप्रियाय च ।। १४

भजन्महिमविख्यात्रेऽमरारिमहिमच्छिदे ।
लाभाय मुण्डिपूज्याय यमिने हेममालिने ।। १५

गतोपाधिव्याधये च हिरण्याहितकान्तये ।
यतीन्द्रचर्यां दधते नरभावौषधाय च ।। १६

वरिष्ठयोगिपूज्याय तन्तुसंतन्वते नमः ।
स्वात्मगाथासुतीर्थाय सुश्रिये षट्कराय च ।। १७

तेजोमयोत्तमाङ्गाय नोदनानोद्यकर्मणे ।
हान्याप्तिमृतिविज्ञात्रे ओङ्कारितसुभक्तये ।। १८

रुक्शुङ्मनःखेदहृते दर्शनाविषयात्मने ।
राङ्कवाततवस्त्राय नरतत्त्वप्रकाशिने ।। १९

द्रावितप्रणताघायाऽत्तस्वजिष्णुस्वराशये ।
राजत्त्र्यास्यैकरूपाय मस्थाय मसुबन्धवे ।। २०

यतये चोदनातीतप्रचारप्रभवे नमः ।
मानरोषविहीनाय शिष्यसंसिद्धिकारिणे ।। २१

गन्त्रे पादविहीनाय चोदनाचोदितात्मने।
यवीयसेऽऽलर्कदुःखवारिणेऽखण्डितात्मने ॥ २२

ह्रींबीजायार्जुनेष्टाय दर्शनादर्शितात्मने।
नतिसंतुष्टचित्ताय यतये ब्रह्मचारिणे ॥ २३

इत्येष सत्स्तवो वृत्तोऽयात्कं देयात्प्रजापिने।
मस्करीशो मनुस्यूतः परब्रह्मपदप्रदः ॥ २४

*इति श्रीदत्तात्रेयाष्टोत्तरशतनामावलिस्तोत्रं सम्पूर्णम् ॥*

## १३.दत्तात्रेयाष्टोत्तरशतनामावलिः

ओंकारतत्वरूपाय नमः। दिव्यज्ञानात्मने। नभोऽतीत महाधाम्ने। ऐन्द्रर्ध्या ओजसे। नष्टमत्सरगम्याय। अगम्याचारात्मवर्त्मने। मोचितामेध्यकृतये। ह्रींबीजश्राणित श्रितये। मोहादिविभ्रमान्ताय। बहुकायधराय। भक्तदुर्वैभवच्छेत्रे। क्लींबीजवरजापिने। भवहेतुविनाशाय। राजच्छोणाधराय। गतिप्रकम्पिताण्डाय। चारुव्यायतबाहवे। गतगर्वप्रियाय। यमादियतचेतसे। वशिताजातवश्याय। मुण्डिने नमः। (२०)

अनसूयवे नमः। वदद्वरेण्यवाग्जालाविस्पष्टविविधात्मने। तपोधनप्रसन्नाय। इडापतिस्तुतकीर्तये। तेजोमण्यन्तरङ्गाय। अद्मरसद्मविहापिने। आन्तरस्थानसंस्थाय। अयैश्वर्यश्रौतगीतये। वातादिभययुग्भावहेतवे। हेतुहेतवे। जगदात्मात्मभूताय। विद्विषत्षट्कघातिने। सुरवर्गोद्धृते। भूत्यै। असुरावासभेदिने। नेत्रे। नयनाक्ष्णे। अचिच्चेतनाय। महात्मने। देवाधिदेवदेवाय नमः। (४०)

वसुधासुरपालिने नमः । याजिनामग्रगण्याय । द्रांबीजजपतुष्टाय । वासनावनदावाय । धूलियुग्देहमालिने । यतिसंन्यासिगतये। दत्तात्रेयेतिसंविदे। यजनास्यभुजे। अजाय। तारकावासगामिने । महाजवास्पृग्रूपाय । आत्ताकाराय। विरूपिणे । नराय । धीप्रदीपाय । यशस्वियशसे। हारिणे । उज्ज्वलाङ्गाय। अत्रेस्तनूजाय। शंभवे नमः। (६०)

मोचितामरसंघाय नमः । धीमतां धीकराय । बलिष्ठविप्रलभ्याय । यागहोमप्रियाय । भजन्महिमविख्यात्रे । अमरारिमहिमच्छिदे । लाभाय । मुण्डिपूज्याय । यमिने । हेममालिने । गतोपाधिव्याधये । हिरण्याहितकान्तये । यतीन्द्रचर्यां दधते । नरभावौषधाय । वरिष्ठयोगिपूज्याय । तन्तुसन्तन्वते । स्वात्मगाथासुतीर्थाय । मश्रिये । षट्कराय । तेजोमयोत्तमाङ्गाय नमः । (८०)

नोदनानोद्यकर्मणे नमः । हान्याप्तिमृतिविज्ञात्रे । ओङ्कारितसुभक्तये। रुक्शुङ्मनःखेदहृते। दर्शनाविषयात्मने। राङ्कवाततवस्त्राय । नरतत्वप्रकाशिने । द्रावितप्रणताघाय । आत्तस्वजिष्णुस्वराशये । राजत्त्र्यास्यैकरूपाय । मस्थाय । मसुबन्धवे। यतये। चोदनातीतप्रचारप्रभवे। मानरोषविहीनाय। शिष्यसंसिद्धिकारिणे । गन्त्रे । पादविहीनाय । चोदनाचोदितात्मने। यवीयसे नमः। (१००)

अलर्कदुःखवारिणे नमः । अखण्डितात्मने। ह्रींबीजाय। अर्जुनेष्टाय । दर्शनादर्शितात्मने । नतिसन्तुष्टचित्ताय । यतये । ब्रह्मचारिणे नमः ।। १०८

# १३. श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम्

अस्य श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रमहामन्त्रस्य, ब्रह्मविष्णुमहेश्वरा ऋषयः । श्रीदत्तात्रेयो देवता । अनुष्टुप्छन्दः । श्री दत्तात्रेयप्रीत्यर्थे नामपरायणे विनियोगः । द्रां द्रीं द्रूं द्रैं द्रौं द्रः इति करहृदयादिन्यासौ । ध्यानम्——

दिगम्बरं भस्मविलेपिताङ्गं चक्रं त्रिशूलं डमरुं गदां च ।
पद्मासनं योगिमुनीन्द्र वन्द्यं ध्यायामि तं दत्तमभीष्टसिद्ध्यै ॥

लमित्यादि पञ्चपूजाः ।

अनसूयासुतो दत्तो ह्यत्रिपुत्रो महामुनिः ।
योगीन्द्रः पुण्यपुरुषो देवेशो जगदीश्वरः ॥ १

परमात्मा परं ब्रह्म सदानन्दो जगद्गुरुः ।
नित्यतृप्तो निर्विकारो निर्विकल्पो निरञ्जनः ॥ २

गुणात्मको गुणातीतो ब्रह्मविष्णुशिवात्मकः ।
नानारूपधरो नित्यः शान्तो दान्तः कृपानिधिः ॥ ३

भक्तप्रियो भवहरो भगवान्भवनाशनः ।
आदिदेवो महादेवः सर्वेशो भुवनेश्वरः ॥ ४

वेदान्तवेद्यो वरदो विश्वरूपोऽव्ययो हरिः ।
सच्चिदानन्दः सर्वेशो योगीशो भक्तवत्सलः ॥ ५

दिगम्बरो दिव्यमूर्तिर्दिव्यभूतिविभूषणः ।
अनादिसिद्धः सुलभो भक्तवाञ्छितदायकः ॥ ६

एकोऽनेको ह्यद्वितीयो निगमागमपण्डितः ।
भुक्तिमुक्तिप्रदाता च कार्तवीर्यवरप्रदः ॥ ७

शाश्वताङ्गो विशुद्धात्मा विश्वात्मा विश्वतो मुखः ।
सर्वेश्वरः सदातुष्टः सर्वमङ्गलदायकः ॥ ८

निष्कलङ्को निराभासो निर्विकल्पो निराश्रयः ।
पुरुषोत्तमो लोकनाथः पुराणपुरुषोऽनघः ॥ ९

अपारमहिमाऽनन्तो ह्याद्यन्तरहिताकृतिः ।
संसारवनदावाग्निर्भवसागरतारकः ॥ १०

श्रीनिवासो विशालाक्षः क्षीराब्धिशयनोऽच्युतः ।
सर्वपापक्षयकरस्तापत्रयनिवारणः॥ ११

लोकेशः सर्वभूतेशो व्यापकः करुणामयः ।
ब्रह्मादिवन्दितपदो मुनिवन्द्यः स्तुतिप्रियः ॥ १२

नामरूपक्रियातीतो निःस्पृहो निर्मलात्मकः ।
मायाधीशो महात्मा च महादेवो महेश्वरः ॥ १३

व्याघ्रचर्माम्बरधरो नागकुण्डलभूषणः ।
सर्वलक्षणसंपूर्णः सर्वसिद्धिप्रदायकः ॥ १४

सर्वज्ञः करुणासिन्धुः सर्पहारः सदाशिवः ।
सह्याद्रिवासः सर्वात्मा भवबन्धविमोचनः ॥ १५

विश्वंभरो विश्वनाथो जगन्नाथो जगत्प्रभुः ।
नित्यं पठति यो भक्त्या सर्वपापैः प्रमुच्यते ॥ १६

सर्वदुःखप्रशमनं सर्वारिष्टनिवारणम् ।
भोगमोक्षप्रदं नृणां दत्तसायुज्यदायकम् ॥ १७

पठन्ति ये प्रयत्नेन सत्यं सत्यं वदाम्यहम् ।

*इति ब्रह्माण्डपुराणे ब्रह्मनारदसंवादे*

*श्रीदत्तात्रेयाष्टोत्तरशतनामस्तोत्रम् ।*

* * *



# १४. श्रीदत्तात्रेयाष्टोत्तरशतनामावलिः

अनसूयासुताय नमः । दत्ताय । अत्रिपुत्राय । महामुनये । योगीन्द्राय । पुण्यपुरुषाय । देवेशाय । जगदीश्वराय । परमात्मने । परस्मै ब्रह्मणे । सदानन्दाय । जगद्गुरवे । नित्यतृप्ताय । निर्विकाराय । निर्विकल्पाय । निरञ्जनाय । गुणात्मकाय । गुणातीताय । ब्रह्मविष्णुशिवात्मकाय । नानारूपधराय नमः। (२०)

नित्याय नमः । शान्ताय । दान्ताय । कृपानिधये । भक्तिप्रियाय । भवहराय । भगवते । भवनाशनाय । आदिदेवाय । महादेवाय । सर्वेशाय । भुवनेश्वराय । वेदान्तवेद्याय । वरदाय । विश्वरूपाय । अव्ययाय । हरये । सच्चिदानन्दाय । सर्वेशाय । योगीशाय नमः । ४०

भक्तवत्सलाय नमः । दिगम्बराय । दिव्यमूर्तये । दिव्यभूतिविभूषणाय । अनादिसिद्धाय । सुलभाय । भक्तवाञ्छितदायकाय । एकाय । अनेकाय । अद्वितीयाय । निगमागमपण्डिताय । भुक्तिमुक्तिप्रदात्रे । कार्तवीर्यवरप्रदाय । शाश्वताङ्गाय । विशुद्धात्मने । विश्वात्मने । विश्वतोमुखाय । सर्वेश्वराय । सदातुष्टाय । सर्वमङ्गलदायकाय नमः । (६०)

निष्कलङ्काय नमः । निराभासाय । निर्विकल्पाय । निराश्रयाय । पुरुषोत्तमाय । लोकनाथाय । पुराणपुरुषाय । अनघाय । अपारमहिम्ने । अनन्ताय । आद्यन्तरहिताकृतये । संसारवनदावाग्नये । भवसागरतारकाय । श्रीनिवासाय । विशालाक्षाय । क्षीराब्धिशयनाय । अच्युताय । सर्वपापक्षयकराय । तापत्रयनिवारणाय । लोकेशाय नमः । (८०)

सर्वभूतेशाय नमः । व्यापकाय । करुणामयाय । ब्रह्मादिवन्दितपदाय । मुनिवन्द्याय । स्तुतिप्रियाय ।

नामरूपक्रियातीताय । निःस्पृहाय । निर्मलात्मकाय । मायाधीशाय । महात्मने । महादेवाय । महेश्वराय । व्याघ्रचर्माम्बरधराय । नागकुण्डलभूषणाय । सर्वज्ञाय । करुणासिन्धवे । सर्पहाराय नमः । (१००)

सदाशिवाय नमः । सह्याद्रिवासाय । सर्वात्मने । भवबन्धविमोचनाय । विश्वम्भराय । विश्वनाथाय । जगन्नाथाय । जगत्प्रभवे नमः । (१०८)

## १४. दत्तप्रबोधः

नित्यो हि यस्य महिमा न हि मानमेति
स त्वं महेश भगवन्मघवन्मुखेड्य ।
उत्तिष्ठ तिष्ठदमृतैरमृतैरिवोच्चैः
गीतागमैश्च पुरुधा पुरुधामशालिन् ।। १ ।।

भक्तेषु जागृहि मुदाऽहिमुदारभावं
तल्पं विधाय सविशेषविशेषहेतो ।
यः शेष एष सकलः सकलः स्वगीतैः
त्वं जागृहि श्रितपते तपते नमस्ते ।। २

दृष्ट्वा जनान् विविधकष्टवशान्दयालुः
त्र्यात्मा बभूव सकलार्तिहरोऽत्र दत्तः ।
अत्रेर्मुनेः सुतपसोऽपि फलं च दातुं
बुद्ध्यस्व स त्वमिह यन्महिमानियत्तः ।। ३

आयात्यशेषविनुतोऽप्यवगाहनाय
दत्तोऽधुनेति सुरसिन्धुरपेक्षते त्वाम् ।
क्षेत्रे तथैव कुरुसंज्ञक एत्य सिद्धाः
तस्थुस्तवाचमनदेश इनोदयात्प्राक् ।। ४

संध्यामुपासितमजोऽप्यधुनाऽऽगमिष्य-
त्याकाङ्क्षते कृतिजनः प्रतिवीक्षते त्वाम्।
कृष्णातटेऽपि नरसिंहसुवाटिकायां
सारार्तिकः कृतिजनः प्रतिवीक्षते त्वाम्॥ ५

गान्धर्वसंज्ञकपुरेऽपि सुभाविकास्ते
ध्यानार्थमत्र भगवान्समुपैष्यतीति।
मत्वास्थुराचरितसंनियताप्लवाद्या
उत्तिष्ठ देव भगवन्नत एव शीघ्रम्॥ ६

पुत्री दिवः खगगणान् सुचिरं प्रसुप्तान्
उत्पातयत्यरुणगा अधिरुह्य तूषाः।
काषायवस्त्रमपिधानमपावृणूद्यन्
तार्क्ष्याग्रजोऽयमवलोकय तं पुरस्तात्॥ ७

शाटीनिभाभ्रपटलानि तवेन्द्रकाष्ठा-
भागं यतीन्द्र रुरुधुर्गरुडाग्रजोऽतः।
अस्माभिरीश विदितो ह्युदितोऽयमेवं
चन्द्रोऽपि ते मुखरुचिं चिरगां जहाति॥ ८

द्वारेऽर्जुनस्तव च तिष्ठति कार्तवीर्यः
प्रह्लाद एष यदुरेष मदालसाजः।
त्वां द्रष्टुकाम इतरे मुनयोऽपि चाहं
उत्तिष्ठ दर्शय निजं सुमुखं प्रसीद॥ ९

एवं प्रबुद्ध इव संस्तवनादभूत्स
मालां कमण्डलुमधो डमरुं त्रिशूलम्।
चक्रं च शङ्खमुपरि स्वकरैर्दधानो
नित्यं स मामवतु भावितवासुदेवः॥ १०

*इति वासुदेवानन्दसरस्वतीविरचितो दत्तप्रबोधः॥*

# १५. दत्तात्मपूजास्तोत्रम्

उद्बोधनम् -

अजितामृत योगनिद्रिता-
च्युतशक्तेः स्वकृतातिमोहित ।
द्युमुखे श्रुतिबन्दिगीततो
भगवञ्जागृहि जागृहि त्र्यधीट् ।। १

ध्यानम् -

यतोऽस्य जननाद्यजः स्ववशमाय आद्यो विभुः
स्वराट् सकलविद्गुरुः स सुखसच्चिदात्मा प्रभुः ।
असंसृतिररूप उज्झितमलोऽमुमैक्याप्तये
निवर्त्य नयनं निषेधविधिवाक्यतश्चिन्तये ।। २

आवाहनम् -

कार्याक्षमान्वीक्ष्य पृथग्युतान्वा
योऽनुप्रविश्यापि विभुर्निजांशात्।
निन्ये प्रभुत्वं हि महन्मुखांस्तं
उपाह्वये त्रीशमनन्यचित्तः ।। ३

आसनम्–

अनेजज्जवीयो हृदोऽप्याप्नुवन्नो
सुराः पूर्वमर्शत्पराञ्चोऽपि तिष्ठत् ।
परान् धावतोऽत्येति यद्वचासनं ते
त्र्यधीशार्पितं चित्तमस्तान्यवृत्ति ।। ४

पाद्यम्-

राहोः शीर्षवदौपचारिकभिदा विष्णो पदं त्रीश ते
प्रत्यक्त्वाच्च निसर्गशुद्धमपि सन् मायांशतोऽशुद्धवत् ।

भातं मूढधिया तदर्थममलं ज्ञानामृतं यत्नतो
ध्यामत्रेऽत्र हिरण्मये विनिहितं पाद्यं गृहाणात्मभ ॥ ५

अर्घ्यम्-

देवाचार्यप्रसादप्रजनितसुरसंपत्तिसद्रत्नजात-
श्रेण्याढ्ये मञ्जुलेऽस्मिन्नतितरविमले भाजने वै विशाले।
चेतःसंज्ञेऽविलोले धृतभजनजलाद्वेष्टृताद्यर्थजाले
स्वर्घ्यं संपादितं ते त्र्यधिप परम भोः स्वीकुरुष्वाप्तकाम ॥

आचमनम्——
विधिवच्छ्रवणादि यत्कृतं ते त्र्यधिपा भव मे प्रसीद शम्भो।
द्विविधावरणाम्बु तेऽर्पितं सत्कृपयाऽचमनं कुरुष्व तेन ॥ ७

स्नानम्——

प्रवचनादिसुदुर्लभता श्रुतेस्त्र्यधिपते त इह श्रुतिविश्रुते।
परमभक्तिसुशीतलसज्जलं वपुषि सिक्तमथाप्लुतयेऽस्त्वलम् ॥ ८

वस्त्रम्——

यत्किंञ्चिज्जगति त्रीश तत्त्वयाऽऽवास्यमीश ते।
वस्त्रत्वेनार्पितं तेन परानन्दार्हतास्तु मे ॥ ९

यज्ञोपवीतम्——

यद्ब्रह्मसूत्रं त्रिवृतं पवित्रं कृत्वा समन्त्रं त्रिप सस्वतन्त्रम्।
दत्तं सुमित्रं भजते न चात्र सत्रं सुपात्रं कुरु माऽन्यतन्त्रम् ॥ १०

चन्दनम्——

आह्लादनं चन्दनमुच्यते तत्सत्यर्तरूपं न ततः परं ते।
प्रेष्ठं त्र्यधीशागुण तेन नूनमालेपनं ते प्रकरोमि भक्त्या ॥ ११

पुष्पम्—

भगवंस्त्र्यधिप प्रददामि मुदे सुमनः सुमनः सकलार्थविदे।
खलु तुभ्यममूल्यमघौघभिदे सुमनः सुमनस्कमनन्यहृदे॥ १२

धूपः—

योगानलेऽत्र बलदर्पपरिग्रहाहं-
कारभिलाषममताप्रतिघांश्च दग्ध्वा।
धूपोऽयमुत्तमतमोऽर्पित आर्य शान्ति-
द्वारा त्र्यधीश पदपर्यवसाय्यसौ ते॥ १३

दीपः—

सोऽहंभावप्रोज्वलज्ज्ञानदीपो मूलाज्ञानध्वान्तसंपातहृत्यै।
स्थेयान्भास्वान् शाश्वतस्त्रीश तुभ्यं
स्वात्मज्योतिर्दत्त एतं गृहाण॥१४

नैवेद्यम्—
यस्य ब्रह्मक्षत्रे मित्रे ग्रासो मृत्युर्लेह्यं पेयम्।
क्वान्वेष्टव्यं तस्मै कस्मै नैवेद्यार्थं दत्तं द्वैतम्॥ १५

ताम्बूलम्—
त्रीश तेऽद्य परभक्तिवीटिका पञ्चमैकपुरुषार्थसाधिका।
निर्विकल्पकसमाधितः पुरा रञ्जिकाऽस्तु भवभञ्जिका वरा॥

प्रदक्षिणम्-
त्वं त्रीशाहमहं त्वमित्यवगतेः स्थेम्ने निदिध्यासना-
त्मानस्ते परिदक्षिणा हि विहिता यद्यच्च मे क्रीडितम्।
तद्ब्रह्मास्तु चिदन्वयेक्षितुरथो त्वानुस्मरन् व्याहरेत्
तारं तारकमेकमात्मनि यथा शार्दूलविक्रीडितम्॥ १७

नमस्कारः——

असकृदभिहिता तेऽनेकजन्माप्तपुण्यैः
प्रणतिविततिरेषा द्वैतशोषा विशेषा ।
त्वयि विनिहितमेतन्मे ज्ञ सर्वं स्वकीयं
त्र्यधिप जयतु पूजा त्वद्यशोमालिनीयम् ।। १८

क्षमापणम्——

यन्मे न्यूनं संमतं स्थूलदृष्ट्या भूमन् तेऽनुक्रोशपीयूषवृष्ट्या ।
नित्यं प्रेयः स्वप्रभं शालिनीयं तस्याभूत्संपूर्णताशालिनीयम् ।।

रोधनं द्व्यात्मनः शोधनं द्व्यात्मनः
पूजनं त्र्यात्मनो भोजनं स्वात्मनः ।
यत्र सैषाऽत्मपूजाऽस्तु कण्ठे सतां
स्रग्विणी मा परा स्त्रीव कण्ठे सताम् ।। २०

*इति श्रीमद्वासुदेवानन्दसरस्वतीविरचिता आत्मपूजा*

# १६. श्रीदत्तप्रार्थनाचतुष्कम्

।। श्रीगणेशाय नमः ।।

समस्तदोषशोषणं स्वभक्तचित्ततोषणं
निजाश्रितप्रपोषणं यतीश्वराग्र्यभूषणम् ।
त्रयीशिरोविभूषणं प्रदर्शितार्थदूषणं
भजेऽत्रिजं गतैषणं विभुं विभूतिभूषणम् ।। १

समतस्तलोककारणं समस्तजीवधारणं
समस्तदुष्टमारणं कुबुद्धिशक्तिजारणम् ।
भजज्जयाद्रिदारणं भजत्कुकर्मवारणं
हरिं स्वभक्ततारणं नमामि साधुचारणम् ।। २

नमाम्यहं मुदास्पदं निवारिताखिलापदं
समस्तदुःखतापदं मुनीन्द्रवन्द्य ते पदम् ।
यदश्रितान्तरा मदं विहाय नित्यसम्मदं
प्रयान्ति नैव ते भिदं मुहुर्भजन्ति चाविदम् ।। ३

प्रसीद सर्वचेतने प्रसीद बुद्धिचेतने
स्वभक्तहृन्निकेतने सदाम्ब दुःखशातने ।
त्वमेव मे प्रसूर्मता त्वमेव मे प्रभो पिता
त्वमेव मेऽखिलेहितार्थदोऽखिलार्तितोऽविता ।। ४

*इति श्रीमद्वासुदेवानन्दसरस्वतीविरचितं*
*श्री दत्तात्रेय प्रार्थनाचतुष्कं सम्पूर्णम् ।*



## १७. दत्तापराधक्षमापणास्तोत्रम्

।। श्री गणेशाय नमः ।।

दत्तात्रेयं त्वां नमामि प्रसीद त्वं सर्वात्मा सर्वकर्ता न वेद ।
कोऽप्यन्तं ते सर्वदेवाधिदेव ज्ञाताज्ञातान्मेऽपराधान्क्षमस्व ।। १

त्वदुद्भवत्वात्त्वदधीनधीत्वात्त्वमेव मे वन्द्य उपास्य आत्मन् ।
अथापि मौढ्यात्स्मरणं न ते मे कृतं क्षमस्व प्रियकृन्महात्मन् ।।

भोगापवर्गप्रदमार्तबन्धुं कारुण्यसिन्धुं परिहाय बन्धुम् ।
हिताय चान्यं परिमार्गयन्ति हा मादृशो नष्टदृशो विमूढाः ।। ३

न मत्समो यद्यपि पापकर्ता न त्वत्समोऽथापि हि पापहर्ता ।
न मत्समोऽन्यो दयनीय आर्य न त्वत्समः क्वापि दयालुवर्यः ।।

अनाथनाथोऽसि सुदीनबन्धो श्रीशाऽनुकम्पामृतपूर्णसिन्धो।
त्वत्पादभक्तिं तव दासदास्यं त्वदीयमन्त्रार्थदृढैकनिष्ठाम्॥ ५

गुरुस्मृतिं निर्मलबुद्धिमाधिव्याधिक्षयं मे विजयं च देहि।
इष्टार्थसिद्धिं वरलोकवश्यं धनान्नवृद्धिं वरगोसमृद्धिम्॥ ६

पुत्रादिलब्धिं म उदारतां च देहीश मे चास्त्वभयं हि सर्वतः।
ब्रह्माग्निभूभ्यो नम ओषधीभ्यो वाचे नमो वाक्पतये च विष्णवे॥ ७

शान्ताऽस्तु भूर्नः शिवमन्तरिक्षं
द्यौश्चाभयं नोऽस्तु दिशः शिवाश्च।
आपश्च विद्युत्परिपान्तु देवाः
शं सर्वतो मेऽभयमस्तु शान्तिः॥ ८

*इति श्रीमद्वासुदेवानन्दसरस्वतीविरचितं*
*श्री दत्तापराधक्षमापणास्तोत्रम्*



# १८. श्री दत्तशरणपञ्चकम्

श्रीशेशब्रह्मादिमूर्ते प्रबुद्ध श्रीपादार्तत्राणने बद्धदीक्ष।
भावग्राह्य क्लेशहारिन्सुकीर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते॥ १

त्वं नो माता त्वं पिताऽऽप्तोऽधिपस्त्वं
त्राता योगक्षेमकृत्सद्गुरुस्त्वम्।
त्वं सर्वस्वं नो प्रभो विश्वमूर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते॥ २

पापं तापं व्याधिमाधिं च दैन्यं भीतिं क्लेशं त्वं हराशु त्वदन्यम्।
त्रातारं नो वीक्ष ईशास्तजूर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते॥ ३

नान्यस्त्राता नापि दाता न भर्ता त्वत्तो देव त्वं शरण्योऽकहर्ता।
कुर्वात्रेयानुग्रहं पूर्णराते घोरात्कष्टादुद्धरास्मान्नमस्ते॥ ४

धर्मे प्रीतिं सन्मतिं देवभक्तिं सत्सङ्गाप्तिं देहि भक्तिं च मुक्तिम्।
भावासक्तिं चाखिलानन्दमूर्ते घोरात्कष्टादुद्धरास्मान्नमस्ते ।। ५

श्लोकपञ्चकमेतद्यो लोकमङ्गलवर्धनम्।
प्रपठेन्नियतो भक्त्या स श्रीदत्तप्रियो भवेत्।। ६

*इति वासुदेवानन्दसरस्वतियतिविरचितं*
*दत्तशरणपञ्चकं सम्पूर्णम्*



दलादनमुनिविरचिता

## १९.दत्तलहरिः

(दत्तात्रेयज्ञानलहरिः)

दलादन ऋषिरुवाच—
विभुर्नित्यानन्दः श्रुतिगणशिरोवेद्यमहिमा
यतो जन्माद्यस्य प्रभवति स मायागुणवतः ।
सदाधारः सत्यो जयति पुरुषार्थैकफलदः
सदा दत्तात्रेयो विहरति मुदा ज्ञानलहरिः ।। १

हरीशब्रह्माणः पदकमलपूजां विदधते
जगद्रक्षाशिक्षाजननकरणे ते ह्यधिकृताः ।
अभूवन्निन्द्राद्या हरिदधिपतां देवमुनयः
परं तत्त्वं प्रापुः शशिदिनकरौ ज्योतिरमलम्।। २

परं ज्योतिर्मूर्ते तव रुचिरतेजःकलरवात्
जगद्व्याप्येदानीं तपनशशिताराहुतभुजः ।
महातेजःपुंजाः सकलजगदाराध्यचरिताः
चरन्त्येवं लोकान्नतजनमनोभीष्टफलदाः।। ३

भवन्मायारूपं जगदखिलजीवात्मकमिदं
भवद्रूपं प्राहुर्निखिलनिगमान्तश्रुतिचयाः ।
त्वया सृष्टं चादौ हृतमवितमेतत्तदधुना
प्रभावं ते वेत्तुं प्रभवति जनः कोऽवनितले ।। ४

कृपासिन्धो तावज्जनुरजननस्याप्यकथिते
जगद्रक्षादीक्षा भवति खलु नो चेत्कथमिदम् ।
अनीहस्याकर्तुस्तव जगति कर्मोपकृतये
प्रमाणीकर्तुं वा स्वकृतनिगमार्थानिति मतिः ।। ५

महाविद्यारूपे भगवति निबद्धत्वमुचितं
हृदा वाचाऽगम्ये परमपि विमुह्यन्ति कवयः ।
अविद्यातीतः किं यदि गुणविहीनोऽपि गुणवान्
अविद्यायुक्तोऽयं त्विति वदति मायामुषितधीः ।। ६

भवानादौ यादोनरमृगखगाश्वादिकतनूः
विधत्ते लोकानामवनकृतिहेतोरनुयुगम् ।
विशुद्धस्त्वं लीलानरवपुरिदानीमटसि गां
पवित्रीकर्तुं वा परिजननिवासाङ्गणतलम् ।। ७

जगद्रक्षार्थं वा विचरसि जगत्यात्मजनता-
परित्राणायाद्यः परमपुरुषोऽगम्यचरितः ।
मृषालोको लोको वदति मनुजत्वं तदधुना
यथा श्रीकृष्णं त्वां यदुषु ब्रुवते मूढमतयः ।। ८

महायोगाधीशैरविदितमहायोगचतुरं
कथं जानन्ति त्वां कुटिलमतयो मादृशजनाः ।
तथापि त्वां जाने तव पदयुगाम्भोजभजनात्
न चेत्त्वत्पादाब्जस्मृतिविषयवाणी कथमभूत् ।।९

अपारे संसारे सुतहितकलत्रादिभरणा-
 द्युपाधौ मग्नास्तत्तरणकरणोपायरहिताः ।
पतन्ति त्वत्पादाम्बुजयुगलसेवासु विमुखाः
 नराः पापात्मानः प्रवरनरके शोकनिलये ।। १०

सुधासिन्धौ द्वीपे कनकतलिते कल्पकवने
 वितानैर्मुक्ताढ्यैर्नवमणिमये मण्डपवरे ।
अशेषैर्माणिक्यैः खचितहरिपीठेऽब्जकुहरे
 हुताशारे ध्यायेत्तव परममूर्तिं निखिलदाम् ।। ११

धराधाराधारे हुतवहपुरेऽधीशगणपं
 विधिं श्रीशेषौ वाऽनलपवनव्योमानि हृदये ।
युतौ जीवात्मानावधिकमवमत्या प्रविशते
 विधत्ते ज्यायस्त्वं परकलितवामेन वपुषा ।। १२

सहस्रारे नीरेरुहि सकलशीतांशुललिते
 सहंसे हंसं यः स्फुटमपि भवन्तं कलयते ।
सुषुम्णावर्तिन्या तव चरणपीठेन्दुसुधया
 ऽऽप्लुतो भित्त्वा ग्रन्थित्रयममृतरूपो विचरति ।। १३

तवाधारे शक्तिक्षितिकमठकर्माद्यभिवृते
 महापीठे वैश्वानरपुरमरुद्देहनिलये ।
धराव्योमाकल्पे सुरमुनिमहेन्द्राद्यभिनुतं
 महातेजोराशिं निगमनिलयं नौमि हृदये ।। १४

भवत्पादाम्भोजं भवजलधिपोतं भजति यो
 महासंसाराब्धिं तरति तरतीत्येव निगमः ।
इहामुत्र त्रातुं तव चरणमेवात्मशरणं
 भजे भीतश्चाहंकृतिपरमनस्कोऽयमधुना ।। १५

यथा दारुष्वग्निर्निवसति तथा देहनिकरे
प्रविश्य त्वं चैको बहुविध इवाभासि भगवन्।
चलन्नीरे चन्द्रः शतविध इवाभाति गुणतो
न चैतच्चन्द्रे स्यान्न शतविधता नापि चलनम्॥ १६

दरिद्रो वा मूढः कठिनहृदयो वापि भवतां
दयापात्रं स्याच्चेद्व्रजति महतामप्यधिकताम्।
न विद्या रूपं वा न कुलमपि वा कारणमभूत्
महत्त्वे सेवैका तव पदयुगाम्भोजकलना॥ १७

न ते कारुण्यं स्यात्सकलगुणवानप्यगुणवान्
भवत्कारुण्यं स्यादगुणगणपो वोरुगुणवान्।
यथा पत्यौ रक्ते यदपि च विरक्ते तु युवतौ
वृथा सौन्दर्यं स्यात्सकलमपि तेऽनुग्रहवशात्॥ १८

अनाथे दीने मय्यधिगतभवत्पादशरणे
शरण्य ब्रह्मण्यप्रथितगुणसिन्धो कुरु दयाम्।
महातेजोवार्धे स्वसुकृतमहिम्नैव सततं
पुरापुण्यैर्हीनं पुरुषमुपकुर्वन्ति कृतिनः॥ १९

महाश्वेतद्वीपेऽमरतरुगणात्यन्तरुचिरे
मणेः पीठाम्भोजेऽनलशशिखगान्तर्निवसितम्।
गदाचक्राब्जासिप्रसृतकरपद्मं मुररिपुं
स धन्यस्त्वां ध्यायेत्परतरचिदानन्दवपुषम्॥ २०

लसन्मेरोः शृङ्गे सुरमणिमये कल्पकतरु
प्रकीर्णे वाक्पीठे रविशशिकराकीर्णजलजे।
स्थितं वाचाधीशैर्नुतमनुदिनं त्वां भजति यो
भवेद्वाणीशानामपि गुरुरजेयोऽवनितले॥ २१

समुद्यद्बालार्कायुतनिभशरीरं मुनिवरं
स्थितं बीजे मारे त्रिदशपतिगोपातिरुचिरे।
हृदि त्वां यः पञ्चायुधकरमिति ध्यायति सदा
स एवाहं नूनं स भवति जगन्मोहनकरः ॥ २२

निधिर्विश्वेषां त्वं निजचरणपद्मद्वयवतां
शरण्यश्चार्तानां चकितहृदयानामभयदः।
वरेण्यः साधूनां वरद इति वा कामितधियां
भवत्सेवा जन्तोः सुरतरुसमानाऽनुफलति ॥ २३

यथा वै पाञ्चाली नटति कुहकेच्छानुसरणं
कुलालेन भ्रान्तं भ्रमति च सकृच्चक्रमनिशम्।
तथा विश्वं सर्वं भवति मनवश्चानुगुणिताः
स्वतन्त्रः को वाऽऽस्ते वद परसुरेश त्रिभुवने ॥ २४

त्वयाऽऽज्ञप्तो धाता सृजति जगदीशोऽपि हरते
हरिः पुष्णातीदं तपति तपनो वाति पवनः।
धरां साद्रिद्वीपां वहति भुजगानामधिपतिः
सुराः सर्वे युष्मद्भयपरवशाद्बिभ्रति बलिम् ॥ २५

स्वयं मुक्तेः पूर्वं स्वकृतसुकृतं मां नयति चेद्
भवान् सत्त्वं का वा तव चरणपङ्केरुहरतिः।
हरेत्पापौघं नः शुभमपि ददातीति च धिया
भवन्त्याशाबद्धाः सकलमपि धातुर्वशमहो ॥ २६

प्रधानं वा कर्म स्थितिविलयसर्गेऽलमिति चेत्
जडत्वात्क्षीणत्वात्कथमुचितमेतन्निगदितुम्।
तयोरीशेऽनीशे भवति जगदुत्पत्तिविलया-
वनान्यासन् ब्रह्मन्निति वदति शास्त्रं श्रुतिरपि ॥ २७

भवत्सेवा जन्तोर्भवदवहुताशाम्बुदनिभा
महामोहध्वान्तप्रतिहतमतेर्दीपकलिका।
सुधावर्षिण्येषाऽवहितमनसां निर्ममनृणां
उपाध्याये ब्रह्मप्रवचनविधानेऽतिचतुरा।। २८

अवज्ञायै लोके बहुपरिचितिः प्राकृतमतिः
निरस्यापो गङ्गा प्रसरति यथा नाल्पतटिनीम्।
विशुद्ध्यर्थं तद्वत् सकलपुरुषार्थैकफलदं
भवन्तं हित्वाऽन्यं भजति गुरुमाशापरवशः।। २९

निमील्याक्षिद्वन्द्वं निगमनिरतो निश्चलमनाः
प्रकाशन्तं दृष्ट्या त्रिभुवनमुदं ज्ञानपरया।
ललाटेऽधोमुख्या रसजनितदिव्याञ्जनधरं
स्मरेद्यस्त्वां योगी भवति निधिसिद्धेरधिपतिः।। ३०

महामायामन्त्राक्षरकमलपद्मासनयुतं
महानीलच्छायं मधुमुदितयोगिन्यभिवृतम्।
दधानं सद्गन्धासितकनकगोक्षीरतिलकं
मुने यस्त्वां पश्येद्भवति सकलादृश्यकतनुः।। ३१

सुधाधारे हेतौ सकलजगतां स्वर्णकलिते
सिताम्भोजे तेजोधिकतपनबिम्बे श्रुतितनौ।
मणिप्रोते पीठे निखिलसुरबृन्दैः परिवृते
स्थितं त्वामारोग्यं स्मरति हृदि तस्यामृतमयम्।। ३२

परत्रादाता चेद्भवति न ददात्यैहिकसुखं
ददात्येतत्सौख्यं वितरति न चामुष्मिकसुखम्।
भवत्सेवा जन्तोरिह परसुखप्राभयकरी
सुराणामन्येषामनुसरणमात्मैक्यमकरोत्।। ३३

जटी वल्की क्वापि क्वचिदपि सुभूषाम्बरभृती
क्वचिद्भूत्यालिप्तः क्वचिदपि सुगन्धाङ्कितततनुः ।
क्वचिद्योगी भोगी क्वचिदपि विरागी विहरसे
बहुज्ञाना ज्ञातुं तव गतिमशक्ताश्च मुनयः ।। ३४

विशुद्धं चैतन्यं क्वचन जडवत्क्वापि सकला-
गमज्ञोऽप्यज्ञः स्याद्विहरसि कदाचिद्बहुविधः ।
ऋषिभ्यस्त्वं तत्त्वं परममुपदेष्टासि विततं
चरित्रं ते वेत्तुं चतुरधिकवक्त्रा न चतुराः ।। ३५

मणिर्वा मन्त्रो वा विविधविमलैश्वर्यमपि वा
महायोगोऽष्टाङ्गाभ्यसनविहितो वा त्रिभुवनम् ।
समर्थं चैकैकं प्रभवति वशीकर्तुमधिकं
स्थितं त्वय्येवेदं तव किमुत लोकैकवशता ।। ३६

सरस्वत्याधारस्थितमरुदतिप्रेरितपरां
नृपो धारां भित्त्वा रसकमलवासाधिपपुरी ।
परं तेजोरूपं सकलभुवनालोकनिरतो
भवन्तं सद्योगात्परमसमवेतं मुनिपतिः ।। ३७

अपां तत्त्वं हंसं सकलभवदेवे जलरुहे
तडिद्भास्वद्दीप्तिप्रकटदलषट्के सुललिते ।
परं स्वाधिष्ठाने रुचिरतररूपं निरुपमं
स्थितं ध्यायेत्त्वां यो मदनसमरूपो विजयते ।। ३८

परीतं त्वां विष्णो हुतहवनमायाविलसिते
सरोजे नीलाभे मणिरचितपीठे मणिगृहे ।
महासिद्धैः कल्पद्रुमवरतले स्वर्णनिचयात्
प्रवर्षद्भिः स स्यात्परमतनुभूतिः स्मरति यः ।। ३९

मरुत्ताराप्राभे कनकरुचिपद्मे श्रुतिमयं
प्रभुं लोकातीतं निखिलनिगमावेद्यचरितम्।
भजन्ते ये त्वां ते सुदृढतरतादात्म्यकदृशां
चिदानन्दं मायागुणविरहितं यान्ति परमम्॥ ४०

सुधाशुद्धे व्योम्नि द्रुहिणरमणीबीजलसिते
विशुद्धाम्भोजान्ते सुरनरखगाद्यन्तरहितम्।
भवन्तं भावोत्थैः कुसुममुखपूजोपकरणैः
समर्हँल्लोके नाऽद्वितयपरमं ब्रह्म भजते॥ ४१

तडिल्लेखाशोचिर्द्विदलकमले भासि परमो
महामुक्तानङ्गोऽनलशशभृतोऽक्षीणि भवतः।
अशेषस्रोतःसु प्रसृतचितिरूपोऽङ्गकनकः
श्रुतिप्राणोऽष्टाङ्गप्रगुणितकलापीठनिलयः॥ ४२

कचिद्गुह्यं जिह्वा क च गुदकमन्यत्र कविता
कचिद्वागन्यत्र श्रुतिरपरतो लोचनयुगम्।
समाकर्षन्त्यात्मानं तमिव बहुभार्याः प्रलुभिताः
ततो ध्यातुं स्थातुं कथमपि न शक्तस्तव पदम्॥ ४३

अशक्तोऽहं स्नातुं क्षणमपि जपं कर्तुमपि वै-
दनाभावादेवातिथिजनसपर्या च न कृता।
कुतो ज्ञानं ध्यानं त्वकृतगुरुसेवस्य मम भो
भवेदेवैकाशा वसति तव भक्तत्वजनिता॥ ४४

अमन्दे मन्दारद्रुमवरसमीपे मणिमये
सुखासीनं पीठे सुरवरमुनीन्द्रादिविनुतम्।
स्वहृत्पद्मे वापि स्थितमनुदिनं त्वां भजति यः
स चेहामुष्मिन्वा सकलजनपूज्यश्च भवति॥ ४५

तृणं मेरुं कुर्यात्सुरवरगिरिं वापि च तृणं
भवत्सामर्थ्यं वाऽघटितघटनाप्रौढिमतनो।
इदं जाने तस्मै पुनरपि न जानन्ति कवयो
ऽप्यहो युष्मन्माया सकलजनमोहोन्मदकरी ॥ ४६

नटो भूयो वेषैर्बहुविध इवाभाति सगुणो
यथैको वाकाशो घटमठगुहास्वन्तरगतः।
यथैकं गाङ्गेयं कटकमुकुटाद्याकृतिवशात्
तथा दत्तात्रेय त्वमपि बहुरूपस्त्रिभुवनम् ॥ ४७

सहस्रांशुप्राभे सुरतरुसमाढ्येऽधिकतरे
विमाने हंसाख्ये स्थितममृतनीहारवपुषम्।
परीतं त्वां ध्यायेद्यदरजसमारूढमनिलैः
अशेषैराज्ञायां भवति खचरो व्योमगमनैः ॥ ४८

स्थितं मूलाधारे कनकरुचिराङ्गं हुतभुजः
शिखाभिः प्रख्याभिर्वृतमखिलतेजोरसघटम्।
धरन्तं भ्रूमध्ये प्रसृतनयनः पश्यति च यः
परं त्वां सत्यं स्यादखिलरसविद्यातिनिपुणः ॥ ४९

शिरःप्रान्तभ्रान्तायतकुटिलबालार्कमतुलं
प्रदीप्तं स्वर्णाढ्यारुणशतलसत्कुण्डलधरम्।
मरुत्पुत्रं लङ्काधिपतनुजनाशोद्यतकरं
स्मरेद्यस्त्वां यत्नात्सकलभयभूतापहरणे ॥ ५०

गरुत्मन्तं चञ्चच्चलकनकपक्षद्वययुतं
सुधाकुम्भोद्धारस्वत्करमखिललोकाभिगमनम्।
अचिन्त्यं वेदैस्त्वां परममुनिनाथं स्मरति यः
स दक्षोऽसौ वादी कपटविषजन्तुप्रहरणे ॥ ५१

स्मृतिं निन्दन्तं ये मनुजमुपतिष्ठन्त्यतिबलात्
कृताशा मिथ्या स्यात्प्रणतजनमन्दार भवता ।
अदत्ते दत्तत्वादमलतरचिद्रम्यविभवः
सदा दत्तात्रेयो भवसि भजतामिष्टफलदः ।। ५२

विधिं विष्णुं मायां शृणिमदनयोनिं दिनकरं
मिलित्वाऽनङ्गेनानलयुवतियुक्तां जपति यः ।
त्वदाख्यामाख्येयां निखिलनिगमाढ्यामखिलदां
स सम्पद्भिर्देवाधिपविभवयुक्तो विहरति ।। ५३

परामायावाणीमदनकमलाबीजसहितं
मनुं प्रत्येकं ते जपति सततं निश्चलधिया ।
यतोऽभ्येत्यैश्वर्याश्रुतसकलविद्यानिपुणता
वशित्वं ब्रह्मैक्यं सपदि यदि यायात्परमुने ।। ५४

अविज्ञातं किञ्चित्तव जगति नास्ति प्रभवितुः
तदा विज्ञातोऽहं यदपि सकलज्ञेन भवता ।
अदृष्टं मन्येऽहं प्रतिभटमविज्ञानकरणे
मुने दत्तात्रेय प्रकुरु मयि कारुण्यमतुलम् ।। ५५

भवत्पादाम्भोजद्वयशुभरसास्वादचतुरा
भ्रमद्भृङ्गीसङ्घायितहृदयवृद्धिं कलय माम् ।
अनाधाराधाराश्रितसुरतरो तावकजने
मुने कारुण्याब्धे प्रकुरु मयि संपत्प्रकटनम् ।। ५६

वदन्त्येकेऽपार्थास्तव गतिमनेकार्थहरिणीं
अजानन्तो ज्ञेयामनधिगततत्त्वार्थमतयः ।
महायोगिँल्लोके जडमतिकृते त्वं धृतवपुः
तथा नो चेद्भक्तस्वजनपरिरक्षा कथमहो ।। ५७

स्मृतस्त्वच्छिष्यो वा जगति कृतवीर्यस्य तनयो
ऽर्जुनो राजा चोराद्भयमहिभयं वृश्चिकभयम्।
हिनस्त्याजौ शत्रूदितमपि भयं चेति गदितं
भवेयुस्त्वच्छिष्याः किमुत हृतचोराधिकभयाः ।। ५८

पदानां सेव्यो वा न भवसि यदा किञ्चन नृणां
प्रियः साधूनां त्वं तव च सुहृदस्तेऽपि सुजनाः ।
मयि त्वार्ते दीने जननमरणाद्यैः कुरु दयां
दयावान्को वा मे भ्रमनिगडनिर्मोचनविधौ ।। ५९

यथा माता पुत्रं सकलगुणहीनं च कुटिलं
प्रपुष्णात्यन्नाद्यैरनुदिनमतीवादरयुता ।
तथा त्वं लोकानां मम च पितरावित्यभिमतं
ततस्त्रातुं दातुं फलमभिमतं चार्हसि विभो ।। ६०

जडं वाचाधीशं सुधियमपि मूकं च कुरुषे
रवेर्वा शीतत्वं यदि च कुरुषे दृष्टिवसतेः ।
अकर्तुं कर्तुं वाऽन्यदपि परिकर्तुं च मनुषे
तदा सर्वं कुर्याः क्वचन किमसाध्यं त्रिभुवने ।। ६१

पुमान्यो वै युष्मच्चरणपरिचर्याकृतिपरो
महालापास्थानाशनशयनपानानि कुरुते ।
स वै धन्यो लोके सकलजगदाराध्यगरिमा
अहो भाग्यं तस्यागणितयशसः कोऽपि न भजेत्।। ६२

प्रसादात्ते यस्मिन्प्रबलतरदारिद्र्यविभवः
स यायादिंद्रत्वं सकलसुरनारीपरिवृतः ।
तवोपेक्षा यस्मिन्भवति स पुराणामधिपतिः
परत्र ह्यत्यन्तं प्रविहतमहैश्वर्यविभवः।। ६३

सदा मन्त्रैर्जाप्यः पुनरपि मनूनेव जपसि
स्वयं तन्त्रध्येयो यदपि कुरुते तन्त्रनिचयम्।
सदा ब्रह्मानन्दामृतजलधिकेलीकलितधीः
स भूतेर्भूयस्या भवतु भगवन्नः कुरु दयाम्।। ६४

तुरीयाग्निश्वेतद्युतिदिनकृदर्कैर्मुनिपतेः
महाविद्याखण्डैः परियुतमहानुष्टुभमनोः।
चतुर्भिश्चक्राब्जाङ्कुशगुणधरं सामि युवतिं
नृसिंहं त्वद्रूपं भजति स पुमर्थैकनिलयः।। ६५

मुने ते माणिक्यप्रवरखचिते हेममुकुटे
पुराकल्पध्वंसे परिकलितसूर्यापररुचः।
वसंत्यस्मिन्नूनं न हि यदि तदा भूतमुनयो
न विद्यन्ते लोकाः प्रखरतिमिरान्तैकचतुराः।। ६६

अहो योगिन्नानामणिखचितभावत्कमुकुटः
शिखाग्रालंबिन्याश्विकतलमसौ रत्नशिखरात्।
महोमेरोर्लीलां कलयति सदा यामकलितां
शरत्सौदामिन्याः कटकवरतेजोमयतनोः।। ६७

सुविज्ञातं लोकैरनवधिसदादेशनपरैः
सुधाभानोः खण्डं तव निबिडभावान्धकरणम्।
द्वितीयं सोमेन्दुस्फुटमुकुटतः कान्तमनघं
महामूर्तिज्योत्स्ना हरति नतदारिद्र्यतिमिरम्।। ६८

धृतं पुण्ड्रं मात्रात्रितयरुचिरं साक्षरमिदं
सहस्रारे हंसः स्थितपरमहंसाजिगमिषोः।
वहन्ती पादाब्जद्वयसरललाक्षारसपदं
पराशक्तेश्चन्द्रोपलरचितसोपानपदवी।। ६९

श्रयेते हैमन्ते तरुविमलपत्रे मधुकरौ
शुभं गर्भाम्भोजे स्थितमिति सुचित्रं शमनिधे।
कठोरेन्दुप्रांशुप्रवरनिकरीभूततिमिरं
सुधांशुर्भावत्को मुकुलयति विद्युत्कुवलयम्॥ ७०

तमोभिर्मूकालीगृहमिदमनुज्जृम्भितमिति
त्वदीये नेत्राब्जे कमलसदना जृम्भितवती।
सदा सुज्ञानेनाविशति सदयाक्षि प्रसरति
प्रभो यस्मिन्स्यात्ते ध्रुवमतिधनोऽयं मुनिपते॥ ७१

यदा योगिन्नीषद्वलिरविलसत्को(मल)दृशोः
उपान्ते नीलाली उदरयुगली कञ्जदलयोः।
वरं कारायेते कनकमकरीकुण्डलयुगे
कटाक्षौ चाम्पेयस्तबकविचरन्ताविव वरौ॥ ७२

त्रयीविद्यारूपस्त्रितनुरहिमांशु प्रतिदिनं
श्रुती भावत्के चिद्विविधमकरीकुण्डलपदे।
मिलित्वाऽऽत्माऽयं ते घनतरमुपाधिद्वयमिति
व्यनक्ति श्रीकारं निखिलजगदुद्दीपकमुने॥ ७३

कपोलौ यौष्माकौ स्फुटमुकुरबिम्बप्रतिभटौ
भृशं सङ्घर्षित्वात्प्रतिदिनसमारोपितरुचौ।
निजा कान्तिर्नित्या कनकनिकषोऽत्यन्तमहिमा
त्वदीया नीचैव प्रचुरतरकान्तिस्तव मुने॥ ७४

मुखेन्दुं दृष्ट्वा ते यदि विशति राहुं प्रति भयात्
शशी वक्त्रं प्राप्य द्विगुणितकलानां निधिरभूत्।
द्विजानां राज्य(ज)त्वं प्रकटितमतो दत्तशरणी-
बलेनाहो स्वामिन् कथमपि च लभ्यो हि महिमा॥ ७५

तवायं बिम्बोष्ठश्चिबुकसहितो विद्रुमलता
समाक्षिप्ता तिर्यग्यदि बहुपदं स्यात्फलयुगम्।
व्रजे तत्साम्यं तन्निहितमुत वा पल्लवपदं
यदि स्यात्ते नालं तुलयितुमहो संयमिपते ।। ७६

भवद्वाणीश्रेर्णी श्रवणपुटसौख्यप्रकरर्णी
विजेतुं वाक्श्रुत्वा स्त्रयमुत विदित्वाऽहमिति भाक्।
अशक्ता तेऽत्यन्तं फणिललितजिह्वाग्रमिषतः
प्रविष्टा वक्त्रान्तं सितमणिलसद्विद्रुमगृहम्।। ७७

तवावृत्ता रेखात्रयविलसिता कम्बुरभवत्
शिराणामाधारः कथमभवदेतन्न यदि चेत्।
अथेमामूहेऽहं त्विति कविहराद्याकृतिधरां
तथा नो चेद्वेदत्रितयकलितां वाऽपि गणये ।। ७८

महानन्तश्चासीद्विषधरवरो वासुकिरसौ
निबर्हन्तौ मर्त्याधिकभयकरत्वं गणयताम्।
भुजाकारौ स्वीयौ तव तु भुजसत्त्वं विदधतां
मुने भूतौ स्निग्धौ सपदि वरदौ चाभयकरौ ।। ७९

मुने गङ्गास्रोतोऽमरखगिरिप्रस्थफलके
प्रसादे स्वर्णाढ्यं प्रभवदभवद्भागलुलितम्।
त्रिसूत्रं सुस्निग्धं धवलमुपवीतं कलयते
महायोगिन्मूर्तित्रयमपि विलीनं तदथवा ।। ८०

प्रसिद्धः स्वर्णाद्रिर्दिवि विबुधवाचावितरणात्
प्रशस्तौ ते हस्तावखिलपुरुषार्थप्रकरणात्।
जनानां पादाब्ज द्वितयमधिकं प्रेम भजतां
मुनीन्द्र त्रैलोक्याद्भुतगणमणिक्षीरजलधे ।। ८१

इयं रोम्णां राजिर्विलसति महानाभिसरसः
प्रवृत्ता कुल्येव प्रतिपतितभङ्गत्रिवलयः ।
नवालेखालोकत्रयविभजनार्थे विरचिता
मुने दत्तात्रेय त्वदुदरविलग्ना विलसिताः ।। ८२

ध्रुवं शम्पा मौञ्जीत्रितयवलिरेखावरतनो
रुरुक्षोः प्रासादं खशय हृदयाख्यं तव हरे ।
महालक्ष्म्याश्चश्चत्कनकमयसोपानपदवी
न चेन्नाभीकुण्डोपरि चिदुपलब्धा सुपरिखा ।। ८३

प्रवृत्तावूरू ते लसदुदरलोकव्रजधृतेः
धृतौ तावद्रीन्द्रस्फुटपटुकटौ संप्रकटितौ ।
कटौ विस्तारौ यत्कटकफलकौ ताविव मुने
महायोगिन्विश्वंभर इति नूनं त्वमधिसूः ।। ८४

कृपालो विश्वेश त्रिभुवनतले ते प्रमितितो
दिवारात्रौ स्थानं मिलति वपुषो जानुयुगलम् ।
अभक्तानित्येतत्कथितमभियुक्तैः समतनोः
प्रपुष्टं त्वं संप्रत्यपि त्वदिदमर्थं हि सुदृढम् ।। ८५

जगन्मूलं स्रष्टा सकलजगतां सर्गकुशलो
भवज्जङ्घे लक्ष्मीकृदसमशरस्य प्रकुरुते ।
प्रकृष्टे ते वीक्ष्य भ्रमवदविलक्ष्योऽल्पगुणवान्
मुने तेनानङ्गस्तव तु विमुखो लक्षणवतः ।। ८६

नराणां नानार्थप्रदरसगुटित्वं च दधतौ
मुने गुल्फौ गूढौ तव चरणपुष्ट्या प्रकटितौ ।
घटावृत्ती नार्या इव सकलकौ वृत्तरुचिरौ
विराजेते तेजोनिकरकलितायाः सुवपुषः ।। ८७

मदाधारं युष्मत्प्रपदमतिपूज्यं सुरुचिरं
धुवात्मानं मत्वा जितमिति सदा कच्छपपतिः ।
विवेशाधो भूमेर्यदि तदिदमेकं स्मयकरं
त्विदानीं तज्ज्ञातिर्मुकुलितशिराश्चाभवदहो ।। ८८

मया दत्तं किञ्चिन्न यदि कलितं वासवमहं
तदा रोचिर्जातं जननमपि पङ्कप्रकटितम् ।
प्रविश्येत्यायोज्यं न चलति ह यत्तत्पदधिया
पदं ते तु श्रीदं सकलसमये श्रीनिलयनम् ।। ८९

मुने ते पादाब्जं नवममृतपादोद्भवमहो
श्रितस्तत् सोदर्यं पशुपतिशिरोब्जं हिमकरः ।
निवृत्तं स्वस्याङ्कं भवति भवदेकात्मवपुषः
कथं ब्रह्मागारे परमपुरुषा नाङ्घ्रिभजनाः ।। ९०

न चित्रं ते पादौ वितरत इति प्रार्थितफलं
विधिं श्रीशं रक्षाकलुषविपदं दृश्यमतुलम् ।
स्मरान्तश्रीगङ्गाधरचरण शङ्खाम्बुजसुर
द्रुमांश्च त्वद्भावानतजनसदानन्दकलनात् ।। ९१

त्रिखण्डैः श्रीविद्यामनुवरभवैर्भावकरिपो
विवृद्धस्ते मन्त्रो विषवदति यो ज्योतिरमलम्।
षडर्णं चन्द्रार्कप्रकररुचि तन्मे प्रभवतां
सदा ज्ञानानन्दं युवतिनृमयं लोचनपदम् ।। ९२

समुन्मीलद्भानुप्रकररुचि वाग्बीजममलं
मरुत्त्वद्वोपाभां मदनलिपिमाधारकमले ।
हृदब्जे शक्त्याख्यं सितकरकराभं शिरसिजे
सरोजे त्वां ध्यायेत्सकलपुरुषार्थान् स लभते ।। ९३

चिदंशस्त्वद्रूपं किमपि सवितुर्मण्डलगतं
वरेण्यं भर्गो वै त्रिविधतनुदेवस्य वपुषि।
मुने धीमह्यासीर्हरिरपि धियो यो न इतरत्
प्रचोदायास्तत्त्वं स्थितिलयसृजस्त्वं मुनिपते॥ ९४

हरित्तन्तुप्रोते सदसि शिखरे शुभ्रकपटो
जगन्मूलस्थाणुस्त्वमिति शुभमस्पन्दमुनिभिः।
झरीभिः स्वर्णाढ्यैः पवनहृतवार्बिन्दुनिकरैः
जटासक्ताब्जाहीरुचिरमभिषिक्तः स्थित इव॥ ९५

दुराचारो जारश्चपलमतिराजः परवशः
परद्रव्याकाङ्क्षी बहुजनविरोधी च सततम्।
तथा चाहं पूतस्तव पदयुगस्पर्शवशतो
ह्ययःखण्डः स्वर्णं भवति हि यदा सिद्धसुरतिः॥ ९६

परिक्रान्ता देशा बहुतरधनस्यार्जनधिया
कुलाचारं हित्वा कुमतिनृपसेवाऽपि च कृता।
विधायाहं श्रान्तं किमपि न च लब्धं तु वपुषा
श्रितं त्वत्पादाब्जं श्रितमनुजमन्दारमधुना॥ ९७

त्वदीयो मे देहस्त्वमपि पितरौ भ्रातृसुहृदः
त्वमेव ब्रह्मन्मे सुतहितगृहक्षेत्रनिवहाः।
त्वमेव प्राणो मे धनमपि मम त्वं तव पदं
न जाने मय्येव स्थितमपि महन्मेयमधुना॥ ९८

नमस्ते तारायामृतजलधिधाम्नेऽधिमहसे
नमस्ते ब्रह्माद्यैर्मुनिसुरवरैः क्लृप्तमहसे।
नमस्तुभ्यं नारायणमुनिविलासाय भवते
मनूनां कोटीनामचलगणितानां च पतये॥ ९९

नमस्ते देवैरप्यविदितमहिम्नेऽतियशसे
नमस्ते दिक्पालप्रकटमुकुटालङ्कृतपदे।
नमस्ते तेजस्विन्नतमनुजमन्दारवपुषे
नमो दत्तात्रेयाकृतिहरिहराजाय महते॥ १००

नमस्ते पापौघाचलविततिसंहारपवये
नमस्ते दारिद्र्यव्यथितजनदैवान्तविधये।
नमस्ते रोगार्तानतमनुजदिव्यौषधिदृशे
नमस्ते दैवं मे नहि नहि जगत्यां तव पदम्॥ १०१

असौ दत्तात्रेयस्तुतियुतकृतिर्ज्ञानिलहरी
सुधाधारापूराखिलनिगमसाराऽनुपठताम्।
श्रुतश्रीविद्यायुर्विभवधनधान्यामृतचयं
ददात्येवात्यन्तं जयति सकलाह्लादजनिका॥ १०२

*इति दलादनमुनिविरचिता श्री दत्तालहरिः*



## २०. दत्तवेदपादस्तुतिः

श्रीदत्तपुराणतः

श्रीदत्तात्रेयाय नमः।

अग्निमीले परं देवं यज्ञस्य त्वां त्र्यधीश्वरम्।
स्तोमोऽयमग्रियोऽर्थ्यस्ते हृदिस्पृगस्तु शन्तमः॥ १

अयं देवाय दूराय गिरां स्वाध्याय सात्वताम्।
स्तोमोऽस्त्वनेन विन्देयं तद्विष्णोः परमं पदम्॥ २

एता या लौकिकाः सन्तु हीना वाचोऽपि नः प्रियाः।
बालस्येव पितुष्टे त्वं स नो मृळ महाँ असि॥ ३

अयं वां नात्मनोस्तत्त्वमधिगम्यास्ति दुर्मनाः ।
हृद्रोगं मम सूर्य त्वं हरिमाणं च नाशय ।। ४

प्रमन्महेऽस्मान्विद्धीति स्तोतारस्ते वयं नमः ।
भगवो देव ते स्तोममारे अस्मे च शृण्वते ।। ५

इन्द्रो मदाय यातीह सत्वरं सोमिनो यथा ।
स्तोतॄनेहि तथाऽस्माँस्ते माध्वीर्गावो भवन्तु नः ।। ६

द्वे विरूपेऽत्र मायायास्तेऽत्र मग्नोऽस्मि पीडितः ।
माभितः सन्तपन्तीह सपत्नीरिव पर्शवः ।। ७

इदं श्रेष्ठमपि प्राप्य जन्म गन्ताऽध एव तत् ।
कुरु प्रसादं ज्ञात्वैतत्तेनाहं भूरि चाकन ।। ८

प्रवस्तुज्ञानाज्जहाति निष्कामश्चेन्मृतिं त्वहम् ।
न तादृशोऽतः कामादि सर्वं रक्षो निबर्हय ।। ९

सुषुमामूर्धियः स्तोमैरागच्छैते वयं विभो ।
त्वदंशास्त्वं पतिर्नोऽसि देवो देवेषु मेधिरः ।। १०

वसू रूपं रूपमिह प्रतिरूपोऽसि नो पृथक् ।
एतानि भूतानि विदुर्ब्राह्मणा ये मनीषिणः ।। ११

तं नु त्वां किं ब्रुवेऽल्पज्ञो भगवन्तं क्षमस्व भोः ।
ओषमागहि मां त्वं चेत्सखा सन्नतिमन्यसे ।।१२

ता वासना घ्नन्ति यथा वृश्चिकस्यारसं विषम् ।
अतो मां पाहि भूयिष्ठां नम उक्तिं विधेम ते ।। १३

नि होता सीदसि विभो यस्त्वं यष्टुर्गृहे प्रिय ।
तं त्वा ह्वये ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पते ।। १४

सेमाविद्धि प्रभृतिमीशिषे योऽव माऽनिशम्।
त्वं विश्वेषां यदीशानो ब्रह्मणा वेषि मे हवम्॥ १५

मन्दः स्वकोऽयं दीनोऽज्ञ इति विद्वान्भवान्प्रभुः।
इन्द्र आशाभ्यः परि मां सर्वाभ्यो अभयं करत्॥ १६

प्र य आरुपितां भ्रान्तिं त्वत्प्रसादाज्जहाति सः।
विमुच्यते तद्विप्रास्त्वां जागृवांसः समिन्धते॥ १७

इच्छन्ति देवा अपि ते प्रसादाय नृजन्म तत्।
विद्वान्नामानि ते दत्त विश्वाभिर्गीर्भिरीमहे॥ १८

इन्द्र त्वा भजतः सूरेर्दुर्लभं किं तरामि तत्।
भक्त्या क्लेशादि ते नावा गम्भीराँ उदधीरिव॥ १९

न ता रोद्धुं धियः शक्ता योगेनापि ततः सदा।
त्रातारं धीमहीश त्वां धियो यो नः प्रचोदयात्॥ २०

वैश्वानराय दत्त्वाऽन्नं विधिलब्धं सदैव ते।
भवामो भजने सक्ता अस्माकं शृणुधी हवं॥ २१

एवा त्वामिन्द्र विप्रासो जागृवांसो विपन्यवः।
स्तुवन्त्येभ्यो हि ते कोऽपि न ज्यायाँ अस्ति वृत्रहन्॥ २२

प्रऋभुभ्यो गृणद्भ्यस्ते मर्त्येभ्योऽप्यमृतत्वमित्।
दत्तं स्मृत्वा तव मनोरथ आयातु पाजसा॥ २३

इतमुत्यदिषं श्रेयो यज्जग्ध्वा परितृप्यति।
साधुस्तद्भजनं तेऽस्मे इषं स्तोतृभ्य आभर॥ २४

त्वामग्रे मायिनं मायां जेतारमपराजितम्।
हित्वा कं शरणं यामः स नो बोधि श्रुधी हवम्॥ २५

मही महेशोऽज्ञानेन भवानवतु मावृतम्।
यथा वै सूर्यं स्वर्भानुस्तमसाविध्यदासुरः ॥ २६

प्रयुञ्जती यदात्मानं मनीषा मनसा सह।
तदैव भवतैकान्तं जानता सङ्गमेमहि ॥ २७

ऋतस्य गोपास्त्वं देहि मह्यं शं युञ्जते धियः।
भीताय नाधमानाय ऋषये सप्तवध्रये ॥ २८

त्वं हि पातासि नो दत्त परिबाधस्व दुष्कृतम्।
कामादीन्यस्य बीजानि जहि रक्षांसि सुक्रतो ॥ २९

पिबा सोममिति श्रुत्वा यष्टुर्हूतिं शुभं द्रवत्।
आयासि पुरुरूप त्वमासु गोषूपपृच्यताम्॥ ३०

इन्द्रं वोतान्यं न पृथङ् मन्ये मायाभिरिद्धवान्।
पुरुरूप इतीक्षे त्वममित्राँ सुषहान्कृधि ॥ ३१

यज्ञा यज्ञाधीश सर्वे त्वन्मया अपि तेषु नः।
जपयज्ञो मतस्तेन समु पूष्णा गमेमहि॥ ३२

स्तुषे नराप्यं तुष्टः सन्थो यस्या अयोमुखम्।
मायां जित्वा भवान्तां मे विश्वाहा शर्म यच्छतु ॥ ३३

जुषस्व स्तोममीशैते प्रियासः सन्तु सूरयः।
वयं स्तोमप्रियानेन यच्छा नः शर्म दीर्घश्रुत्॥ ३४

उग्रो जज्ञे मृत्युरयमदुग्धा इव धेनवः।
धियो मेऽनेनेदृगीश न जातो न जनिष्यते ॥ ३५

प्रब्रह्मैहीदमाकर्ण्योर्वारुकमिव बन्धनात्।
मृत्युञ्जय प्रमादाख्यान्मृत्योर्मुक्षीय माऽमृतात्॥ ३६

यदद्य वर्ष्म तेनैव पश्येम शरदः शतम् ।
स्तोत्राय ते हते मृत्यौ जीवेम शरदः शतम् ।। ३७

प्रत्युत्तमं महेशं त्वां मनामह इहागहि ।
मृळा सुक्षत्र मृलय मानो दुःशंस ईशत ।। ३८

तिस्रो वाचस्तेऽत्र वरां क ईशानं न याचिषत् ।
भक्त्या गृणीमस्त्वां स्तोत्रैस्तेभिर्नस्तूयमागहि ।। ३९

दूराद्विहाय सर्वं त्वामृषयो ये च तुष्टुवुः ।
मर्ता अमर्त्यस्य ते तद्भूरि नाम मनामहे ।। ४०

य इन्द्र त्वं यो नमसा स्वध्वरो हीति संस्तुतः ।
इन्द्रो ब्रह्मेन्द्र ऋषिरित्युप ब्रह्माणि नः शृणु ।। ४१

वयमु त्वा वरं देवमस्मभ्यं शर्म सप्रथः ।
मनामहे पृणन्तं तदभि त्वामिन्द्र नोनुमः ।। ४२

प्रकृतान्यपि सूक्तानि शृण्वन्तं जातवेदसम् ।
त्वां गृणन्ति न के त्वं हि येषामिन्द्रो युवा सखा ।। ४३

त्वावतः पाहि नो मर्त्यान्यत इन्द्र भयामहे ।
आदिश्य पदभक्तिं ते ततो नो अभयं कृधि ।। ४४

आ त्वा रथं न तुरगैः स्तोत्रैस्त्वा वर्तयामसि ।
स त्वं न इन्द्र मृलय यस्य ते स्वादु सख्यमित् ।। ४५

आ प्रबोधं भवोऽबोधः स्वप्नवद्दुःखदोऽशुचिः ।
पतितान्दुःखितान्नूनः पाहि त्वं शृणुधी गिरः ।। ४६

इन्द्राय साम ते गातुं न क्षमो नाम ते गृणे ।
बण्महाँऽअसि सूर्य त्वं सत्रादेव महाँऽअसि ।। ४७

सोमः पुनानोन्तारामो मया त्वं नाधिलक्षितः।
ईक्षे तुच्छान्बहिर्भोगान्योषा जारमिव प्रियम्।। ४८

प्रण इन्दोरपि स्मेरं रूपं ते दर्शयामलम्।
नॄन्स्तोतॄन्पाह्यंहसो नो जहि रक्षांसि सुक्रतो ।। ४९

हिन्वन्ति द्वैतमस्त्यस्माद्भयं विन्दति मामिह।
यदन्ति दूरके यच्च पवमान वि तज्जहि ।। ५०

धर्ता कारकशक्तीनां सर्वेषां त्वमिहैक इत्।
यशोऽत्रेदं पवित्रं ते विततं ब्रह्मणस्पते ।। ५१

असर्जि भवता विश्वमनित्यमवशं बृहत्।
त्वं संस्मर ज्ञ शरण वत्सं जातं न धेनवः ।। ५२

पुरोजितीश भो भूमन् तत्र माममृतं कृधि।
यत्रानन्दाश्च मोदाश्च मुदः प्रमुद आसते ।। ५३

अयं स इति विद्वान्त्सन्यमाय घृतवद्धविः ।
कुतो जुहोम्यतोऽदेवा यमाय जुहुता हविः ।। ५४

निवर्तध्वमितो देवा भद्रं नो अपि वातय।
मनो हरे मां पाह्यार्तं पिता पुत्रमिव प्रियम्।। ५५

प्रमा प्रमाता प्रमेयं त्रिपुटीह न विद्यते।
रूपं तेऽविकृतं सत्त्वं मधुमन्मे परायणम्।। ५६

प्रहोतारोऽत्रैव मनोन्वाहुवामह इत्यतः ।
गमादि मनसो नास्य यो यज्ञस्य प्रसाधनः।। ५७

ये यज्ञेनार्चन्त्यनेन सर्वे नन्दन्ति ते त्वया।
नान्येऽतस्त्वत्प्रिया एव विरूपासो दिवस्परि ।। ५८

देवानां नु वशो योऽस्य सुमङ्गलीरियं वधूः ।
स्नेहेषु त्वच्युतो भोगी पतिर्बन्धेषु बध्यते ।। ५९

विहितं सर्वमित्ते त्वमतो ज्यायांश्च पूरुषः ।
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।। ६०

हये जाये इति वदन्या सालावृकहृत्समा ।
तन्मयो न स वेदामुमात्मानं तव पूरुष ।। ६१

उभा उपाधितोऽत्रैकः पाकेन मनसान्तितः ।
त्वां यदीक्षेत तं माता रेहृलि स उ रेहृलि मातरम् ।। ६२

तदिदात्मन्हृदि वपुः पश्यन्तस्ते मनीषया ।
मुनयो वातरशनाः पिशङ्गा वसतेऽमलाः ।। ६३

त्यं चिन्मयं बुधा रूपं संजानाना उपासते ।
यो अस्य पारे रजसः स नः पर्षदति द्विषः ।। ६४

इषे त्वोर्जे चौदनेन नित्यहोमेऽपि गव्यतः।
यजन्त्यहं त्वकामस्त्वां श्रेष्ठतमाय कर्मणे ।। ६५

अग्न आयाहीति गातुं त्वाऽक्षमः स्तौमि केवलम् ।
निषीद मे हृदि यथा निहोता सत्सि बर्हिषि ।। ६६

शं नो देवीः प्रसादात्ते सन्तु धीवृत्तयोऽनिशम् ।
आत्मप्रवाहाः स्वारस्याच्छंयोरभिस्रवन्तु नः ।। ६७

ज्ञातेऽस्मिन्पाशमुक्तिः सकलविदिति तत्स्यादनिर्देश्यमेकं
सूक्ष्मं चातीन्द्रियं सत्तदयमिति गिरा शाब्दनिर्देश्यमेव ।
वाक्यैस्तत्त्वं विरोधेऽपि सति सुमतिभिः सोऽयमित्यादिवत्तद्-
भागत्यागेन लक्ष्यं वरगुरुकृपया लभ्यमैक्यं हि तज्ज्ञैः ।।

*इति श्री दत्तदवेदपादस्तुतिः समाप्ता ।।*



श्री जगद्गुरुश्रीचन्द्रशेखरभारतीस्वामिपादैः विरचिता

# २१. श्रीदत्तनवरत्नमालिका

वित्ततर्षरहितैर्मनुजानां सत्तमैरनिशसेव्यपदाब्जम्।
चित्तशुद्धिमभिलिप्सुरहं द्राक् दत्तदेवमनिशं कलयामि ॥ १

कार्तवीर्यगुरुमत्रितनूजं पादनम्रशिर आहितहस्तम्।
श्रीदमुख्यहरिदीश्वरपूज्यं दत्तदेवमनिशं कलयामि ॥ २

नाकनायकसमर्चितपादं पाकचन्द्रधर मौल्यवतारम्।
कोकबन्धुसमवेक्ष्यमहस्कं दत्तदेवमनिशं कलयामि ॥ ३

मूकपङ्गु बधिरादिमलोकान् लोकतस्तदितरान्विदधानम्।
एकवस्तुपरिबोधयितारं दत्तदेवमनिशं कलयामि ॥ ४

योगदानत इहैव हरन्तं रोगमाशु नमतां भवसंज्ञम्।
रागमोहमुख वैरिनिवृत्त्यै दत्तदेवमनिशं कलयामि ॥५

जामदग्र्यमुनये त्रिपुरायाः ज्ञानखण्डमवबोधितवन्तम्।
जामिताविदलनं नतपङ्क्तेः दत्तदेवमनिशं कलयामि ॥ ६

तारकं भवमहाजलराशेः पूरकं पदनतेप्सितराशेः।
वारकं कलिमुखोत्थभयानां दत्तदेवमनिशं कलयामि ॥ ७

सत्यवित्सुखनिरन्तरसक्तं स्वान्तमानतजनं विदधानम्।
श्रान्तलोकतातितोषणचन्द्रं दत्तदेवमनिशं कलयामि ॥ ८

रक्षणाय जगतो धृतदेहं शिक्षणाय च दुरध्वगतानाम्।
ऋक्षराजपरिभाविनिटालं दत्तदेवमनिशं कलयामि ॥ ९

नवरत्नमालिकेयं ग्रथिता भक्तेन केनचिद्यतिना।
गुरुवरचरणाब्जयुगे तन्मोदायार्पिता चिरं जीयात्॥ १०



# २२. श्रीदत्तात्रेयवज्रकवचम्।

(रुद्रयामलतः)

ऋषयः ऊचुः।

कथं सङ्कल्पसिद्धिः स्याद्वेदव्यास कलौ युगे।
धर्मार्थकाममोक्षाणां साधनं किमुदाहृतम्॥ १

व्यास उवाच —

शृण्वन्तु ऋषयः सर्वे शीघ्रं सङ्कल्पसाधनम्।
सकृदुच्चारमात्रेण भोगमोक्षप्रदायकम्॥ २

गौरीशृंगे हिमवतः कल्पवृक्षोपशोभिते।
दीप्ते दिव्यमहारत्नहेममण्डपमध्यगम्॥ ३

रत्नसिंहासनासीनं प्रसन्नं परमेश्वरम्।
मन्दस्मितमुखाम्भोजं शङ्करं प्राह पार्वती॥ ४

श्रीदेव्युवाच—
देवदेव महादेव लोकशङ्कर शङ्कर।
मन्त्रजालानि सर्वाणि यन्त्रजालानि कृत्स्नशः॥ ५

तन्त्रजालान्यनेकानि मया त्वत्तः श्रुतानि वै।
इदानीं द्रष्टुमिच्छामि विशेषेण महीतलम्॥ ६

इत्युदीरितमाकर्ण्य पार्वत्या परमेश्वरः।
करेणामृज्य सन्तोषात्पार्वतीं प्रत्यभाषत॥ ७

मयेदानीं त्वया सार्धं वृषमारुह्य गम्यते।
इत्युक्त्वा वृषमारुह्य पार्वत्या सह शङ्करः॥ ८

ययौ भूमण्डलं द्रष्टुं गौर्याश्चित्राणि दर्शयन्।
क्वचिद् विन्ध्याचलप्रान्ते महारण्ये सुदुर्गमे॥ ९

तत्र व्याहर्तुमायान्तं भिल्लं परशुधारिणम्।
वध्यमानं महाव्याघ्रं नखदंष्ट्राभिरावृतम्॥ १०

अतीव चित्रचारित्र्यं वज्रकायसमायुतम्।
अप्रयत्नमनायासमखिलं सुखमास्थितम्॥ ११

पलायन्तं मृगं पश्चाद्व्याघ्रो भीत्या पलायितः।
एतदाश्चर्यमालोक्य पार्वती प्राह शङ्करम्॥ १२

श्रीपार्वत्युवाच—
किमाश्चर्यं किमाश्चर्यमग्रे शम्भो निरीक्ष्यताम्।
इत्युक्तः स ततः शम्भुर्दृष्ट्वा प्राह पुराणवित्॥ १३

श्रीशङ्कर उवाच—
गौरि वक्ष्यामि ते चित्रमवाङ्मानसगोचरम्।
अदृष्टपूर्वमस्माभिर्नास्ति किञ्चिन्न कुत्रचित्॥ १४

मया सम्यक् समासेन वक्ष्यते शृणु पार्वति।
अयं दूरश्रवा नाम भिल्लः परमधार्मिकः॥ १५

समित्कुशप्रसूनानि कन्दमूलफलादिकम्।
प्रत्यहं विपिनं गत्वा समादाय प्रयासतः॥ १६

प्रिये पूर्वं मुनीन्द्रेभ्यः प्रयच्छति न वाञ्छति।
तेऽपि तस्मिन्नपि दयां कुर्वते सर्वमौनिनः॥ १७

दलादनो महायोगी वसन्नेव निजाश्रमे।
कदाचिदस्मरत् सिद्धं दत्तात्रेयं दिगम्बरम्॥ १८

दत्तात्रेयः स्मर्तृगामी चेतिहासं परीक्षितुम्।
तत्क्षणात्सोऽपि योगीन्द्रो दत्तात्रेयः समुत्थितः ॥ १९

तं दृष्ट्वाऽऽश्चर्यतोषाभ्यां दलादनमहामुनिः।
संपूज्याग्रे निषीदन्तं दत्तात्रेयमुवाच तम्॥ २०

मयोपहूतः संप्राप्तो दत्तात्रेय महामुने।
स्मर्तृगामी त्वमित्येतत् किंवदन्तीं परीक्षितुम्॥ २१

मयाद्य संस्मृतोऽसि त्वमपराधं क्षमस्व मे।
दत्तात्रेयो मुनिं प्राह मम प्रकृतिरीदृशी॥ २२

अभक्त्या वा सुभक्त्या वा यः स्मरेन्मामनन्यधीः।
तदानीं तमुपागत्य ददामि तदभीप्सितम्॥ २३

दत्तात्रेयो मुनिं प्राह दलादनमुनीश्वरम्।
यदिष्टं तद्वृणीष्व त्वं यत् प्राप्तोऽहं त्वया स्मृतः ॥ २४

दत्तात्रेयं मुनिः प्राह मया किमपि नोच्यते।
त्वच्चित्ते यत्स्थितं तन्मे प्रयच्छ मुनिपुङ्गव॥ २५

श्रीदत्तात्रेय उवाच—

ममास्ति वज्रकवचं गृहाणेत्यवदन्मुनिम्।
तथेत्यङ्गीकृतवते दलादमुनये मुनिः ॥ २६

स्ववज्रकवचं प्राह ऋषिच्छन्दःपुरःसरम्।
न्यासं ध्यानं फलं तत्र प्रयोजनमशेषतः ॥ २७

अस्य श्रीदत्तात्रेयवज्रकवचस्तोत्रमन्त्रस्य, किरातरूपी महारुद्र ऋषिः, अनुष्टुप् छन्दः, श्रीदत्तात्रेयो देवता, द्रां बीजम्, आं शक्तिः, क्रौं कीलकम्, ओं आत्मने नमः॥ ओं द्रीं मनसे नमः। ओं

आं द्रीं श्रीं सौः ओं क्लां क्लीं क्लूं क्लैं क्लौं क्लः । श्रीदत्तात्रेयप्रसाद-सिद्ध्यर्थे जपे विनियोगः ॥ ओं द्रां अङ्गुष्ठाभ्यां नमः । ओं द्रीं तर्जनीभ्यां नमः । ओं द्रूं मध्यमाभ्यां नमः । ओं द्रैं अनामिकाभ्यां नमः । ओं द्रौं कनिष्ठिकाभ्यां नमः । ओ द्रः करतलकरपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ओं भूर्भुवः स्वरोमिति दिग्बन्धः ।

ध्यानम्——

जगदङ्कुरकन्दाय सच्चिदानन्दमूर्तये ।
दत्तात्रेयाय योगीन्द्रचन्द्राय परमात्मने ॥ २८

कदा योगी कदा भोगी कदा नग्नः पिशाचवत् ।
दत्तात्रेयो हरिः साक्षाद्भुक्तिमुक्तिप्रदायकः ॥ २९

वाराणसीपुरस्नायी कोल्हापुरजपादरः ।
माहुरीपुरभिक्षाशी सह्यशायी दिगम्बरः ॥ ३०

इन्द्रनीलसमाकारश्चन्द्रकान्तिसमद्युतिः ।
वैडूर्यसदृशस्पूर्तिश्चलत्किञ्चिज्जटाधरः ॥ ३१

स्निग्धधावल्ययुक्ताक्षोऽत्यन्तनीलकनीनिकः ।
भ्रूवक्षःश्मश्रुनीलाङ्कः शशाङ्कसदृशाननः ॥ ३२

हासनिर्जितनीहारः कण्ठनिर्जितकम्बुकः ।
मांसलांसो दीर्घबाहुः पाणिनिर्जितपल्लवः ॥ ३३

विशालपीनवक्षाश्च ताम्रपाणिर्दलोदरः ।
पृथुलश्रोणिललितो विशालजघनस्थलः ॥ ३४

रम्भास्तम्भोपमानोरुर्जानुपूर्वैकजङ्घकः ।
गूढगुल्फः कूर्मपृष्ठो लसत्पादोपरिस्थलः ॥ ३५

रक्तारविन्दसदृशरमणीयपदाधरः ।
चर्माम्बरधरो योगी स्मर्तृगामी क्षणे क्षणे ।। ३६

ज्ञानोपदेशनिरतो विपद्धरणदीक्षितः ।
सिद्धासनसमासीन ऋजुकायो हसन्मुखः ।। ३७

वामहस्तेन वरदो दक्षिणेनाभयङ्करः ।
बालोन्मत्तपिशाचीभिः कचिद्युक्तः परीक्षितः ।। ३८

त्यागी भोगी महायोगी नित्यानन्दो निरञ्जनः ।
सर्वरूपी सर्वदाता सर्वगः सर्वकामदः ।। ३९

भस्मोद्धूलितसर्वाङ्गो महापातकनाशनः।
भुक्तिप्रदो मुक्तिदाता जीवन्मुक्तो न संशयः ।। ४०

एवं ध्यात्वाऽनन्यचित्तो मद्वज्रकवचं पठेत्।
मामेव पश्यन्सर्वत्र स मया सह संचरेत्।। ४१

दिगम्बरं भस्मसुगन्धलेपनं चक्रं त्रिशूलं डमरुं गदायुधम्।
पद्मासनं योगिमुनीन्द्रवन्दितं दत्तेति नामस्मरणेन नित्यम्।।

(अथ पञ्चोपचारैः संपूज्य, ओं द्रां इति १०८ वारं जपेत्)

ओं दत्तात्रेयः शिरः पातु सहस्राब्जेषु संस्थितः ।
भालं पात्वानसूयेयश्चन्द्रमण्डलमध्यगः ।। ४३

कूर्चं मनोमयः पातु हं क्षं द्विदलपद्मभूः ।
ज्योतीरूपोऽक्षिणी पातु पातु शब्दात्मकः श्रुती ।। ४४

नासिकां पातु गन्धात्मा मुखं पातु रसात्मकः ।
जिह्वां वेदात्मकः पातु दन्तोष्ठौ पातु धार्मिकः ।। ४५

कपोलावत्रिभूः पातु पात्वशेषं ममात्मवित्।
स्वरात्मा षोडशाराब्जस्थितः स्वात्माऽवताद्गलम्।। ४६

स्कन्धौ चन्द्रानुजः पातु भुजौ पातु कृतादिभूः।
जत्रुणी शत्रुजित् पातु पातु वक्षःस्थलं हरिः।। ४७

कादिठान्तद्वादशारपद्मगो मरुदात्मकः।
योगीश्वरेश्वरः पातु हृदयं हृदयस्थितः।। ४८

पार्श्वे हरिः पार्श्ववर्ती पातु पार्श्वस्थितः स्मृतः।
हठयोगादियोगज्ञः कुक्षिं पातु कृपानिधिः।। ४९

डकारादिफकारान्तदशारसरसीरुहे।
नाभिस्थले वर्तमानो नाभिं वह्न्यात्मकोऽवतु।। ५०

वह्नितत्त्वमयो योगी रक्षतान्मणिपूरकम्।
कटिं कटिस्थब्रह्माण्डवासुदेवात्मकोऽवतु।। ५१

बकारादिलकारान्तषट्पत्राम्बुजबोधकः।
जलतत्त्वमयो योगी स्वाधिष्ठानं ममावतु।। ५२

सिद्धासनसमासीन ऊरू सिद्धेश्वरोऽवतु।
वादिसान्तचतुष्पत्रसरोरुहनिबोधकः।। ५३

मूलाधारं महीरूपो रक्षताद्वीर्यनिग्रही।
पृष्ठं च सर्वतः पातु जानुन्यस्तकराम्बुजः।। ५४

जङ्घे पात्ववधूतेन्द्रः पात्वङ्घ्री तीर्थपावनः।
सर्वाङ्गं पातु सर्वात्मा रोमाण्यवतु केशवः।। ५५

चर्म चर्माम्बरः पातु रक्तं भक्तिप्रियोऽवतु।
मांसं मांसकरः पातु मज्जां मज्जात्मकोऽवतु।। ५६

अस्थीनि स्थिरधीः पायान्मेधां वेधाः प्रपालयेत्।
शुक्रं सुखकरः पातु चित्तं पातु दृढाकृतिः ।। ५७

मनो बुद्धिमहङ्कारं हृषीकेशात्मकोऽवतु।
कर्मेन्द्रियाणि पात्वीशः पातु ज्ञानेन्द्रियाण्यजः ।। ५८

बन्धून् बन्धूत्तमः पायाच्छत्रुभ्यः पातु शत्रुजित्।
गृहारामधनक्षेत्रपुत्रादीञ्छङ्करोऽवतु।। ५९

भार्यां प्रकृतिवत् पातु पश्वादीन्पातु शार्ङ्गभृत्।
प्राणान्पातु प्रधानज्ञो भक्ष्यादीन्पातु भास्करः ।। ६०

सुखं चन्द्रात्मकः पातु दुःखात् पातु पुरान्तकः ।
पशून्पशुपतिः पातु भूतिं भूतेश्वरो मम।। ६१

प्राच्यां विषहरः पातु पात्वग्नेय्यां मखात्मकः ।
याम्यां धर्मात्मकः पातु नैर्ऋत्यां सर्ववैरिहृत्।। ६२

वराहः पातु वारुण्यां वायव्यां प्राणदोऽवतु।
कौबेर्यां धनदः पातु पात्वैशान्यां महागुरुः ।। ६३

ऊर्ध्वं पातु महासिद्धः पात्वधस्ताज्जटाधरः ।
रक्षाहीनं तु यत्स्थानं रक्षत्वादिमुनीश्वरः ।। ६४

मालामन्त्रजपः- हृदयादिन्यासः-
एतन्मे वज्रकवचं यः पठेच्छृणुयादपि।
वज्रकायश्चिरञ्जीवी दत्तात्रेयोऽहमब्रुवम्।। ६५

त्यागी भोगी महायोगी सुखदुःखविवर्जितः ।
सर्वत्रसिद्धसङ्कल्पो जीवन्मुक्तोऽद्य वर्तते।। ६६

इत्युक्त्वान्तर्दधे योगी दत्तात्रेयो दिगम्बरः ।
दलादनोऽपि तज्जप्त्वा जीवन्मुक्तः स वर्तते।। ६७

भिल्लो दूरश्रवा नाम तदानीं श्रुतवानिदम्।
सकृच्छ्रवणमात्रेण वज्राङ्गोऽभवदप्यसौ ।। ६८

इत्येतद्वज्रकवचं दत्तात्रेयस्य योगिनः ।
श्रुत्वाशेषं शम्भुमुखात् पुनरप्याह पार्वती ।। ६९

पार्वत्युवाच–

एतत्कवचमाहात्म्यं वद विस्तरतो मम ।
कुत्र केन कदा जाप्यं किं यज्जाप्यं कथं कथम् ।। ७०

उवाच शम्भुस्तत्सर्वं पार्वत्या विनयोदितम्।
श्रीशिव उवाच——
शृणु पार्वति वक्ष्यामि समाहितमनाविलम् ।। ७१

धर्मार्थकाममोक्षाणामिदमेव परायणम्।
हस्त्यश्वरथपादातिसर्वैश्वर्यप्रदायकम् ।। ७२

पुत्रमित्रकलत्रादिसर्वसन्तोषसाधनम्।
वेदशास्त्रादिविद्यानां निधानं परमं हि तत् ।। ७३

सङ्गीतशास्त्रसाहित्यसत्कवित्वविधायकम्।
बुद्धिविद्यास्मृतिप्रज्ञामतिप्रौढिप्रदायकम् ।। ७४

सर्वसन्तोषकरणं सर्वदुःखनिवारणम्।
शत्रुसंहारकं शीघ्रं यशःकीर्तिविवर्धनम् ।। ७५

अष्टसंख्या महारोगाः सन्निपातास्त्रयोदश ।
षण्णवत्यक्षिरोगाश्च विंशतिर्मेहरोगकाः ।। ७६

अष्टादश तु कुष्ठानि गुल्मान्यष्टविधान्यपि ।
अशीतिर्वातरोगाश्च चत्वारिंशत्तु पैत्तिकाः ।। ७७

विंशतिश्लेष्मरोगाश्च क्षयचातुर्थिकादयः ।
मन्त्रयन्त्रकुयोगाद्याः कल्पतन्त्रादिनिर्मिताः ।। ७८

ब्रह्मराक्षसवेतालकूष्माण्डादिग्रहोद्भवाः ।
सङ्गजा देशकालस्थास्तापत्रयसमुत्थिताः ।। ७९

नवग्रहसमुद्भूता महापातकसंभवाः ।
सर्वे रोगाः प्रणश्यन्ति सहस्रावर्तनाद्ध्रुवम् ।। ८०

अयुतावृत्तिमात्रेण वन्ध्या पुत्रवती भवेत् ।
अयुतद्वितयावृत्त्या ह्यपमृत्युजयो भवेत् ।। ८१

अयुतत्रितयाच्चैव खेचरत्वं प्रजायते ।
सहस्रादयुतादर्वाक् सर्वकार्याणि साधयेत् ।। ८२

लक्षावृत्त्या कार्यसिद्धिर्भवत्येव न संशयः ।। ८३

विषवृक्षस्य मूलेषु तिष्ठन् वै दक्षिणामुखः ।
कुरुते मासमात्रेण वैरिणं विकलेन्द्रियम् ।। ८४

औदुम्बरतरोर्मूले वृद्धिकामेन जाप्यते ।
श्रीवृक्षमूले श्रीकामी तिन्त्रिणी शान्तिकर्मणि ।। ८५

ओजस्कामोऽश्वत्थमूले स्त्रीकामः सहकारके ।
ज्ञानार्थी तुलसीमूले गर्भगेहे सुतार्थिभिः ।। ८६

धनार्थिभिस्तु सुक्षेत्रे पशुकामैस्तु गोष्ठके ।
देवालये सर्वकामैस्तत्काले सर्वदर्शितम् ।। ८७

नाभिमात्रजले स्थित्वा भानुमालोक्य यो जपेत् ।
युद्धे वा शास्त्रवादे वा सहस्रेण जयो भवेत् ।। ८८

कण्ठमात्रे जले स्थित्वा यो रात्रौ कवचं पठेत् ।
ज्वरापस्मारकुष्ठादितापज्वरनिवारणम् ।। ८९

यत्र यत्स्यात्स्थिरं यद्यत्प्रसन्नं तन्निवर्तते।
तेन तत्र हि जप्तव्यं ततः सिद्धिर्भवेद्ध्रुवम्॥ ९०

इत्युक्तवान् शिवो गौर्यै रहस्यं परमं शुभम्।
यः पठेत् वज्रकवचं दत्तात्रेयसमो भवेत्॥ ९१

एवं शिवेन कथितं हिमवत्सुतायै
प्रोक्तं दलादमुनयेऽत्रिसुतेन पूर्वम्।
यः कोऽपि वज्रकवचं पठतीह लोके
दत्तोपमश्चरति योगिवरश्चिरायुः॥ ९२

*इति श्रीरुद्रयामले हिमवत्खण्डे*
*श्रीदत्तात्रेयवज्रकवचस्तोत्रं सम्पूर्णम्॥*



# २३. श्रीदत्तात्रेयस्तोत्रम्

(नारदपुराणतः)

जटाधरं पाण्डुरङ्गं शूलहस्तं कृपानिधिम्।
सर्वरोगहरं देवं दत्तात्रेयमहं भजे॥ १

अस्य श्री दत्तात्रेयस्तोत्रमन्त्रस्य भगवान्नारद ऋषिः, अनुष्टुप् छन्दः, श्रीदत्तः परमात्मा देवता, श्रीदत्तप्रीत्यर्थे जपे विनियोगः।

जगदुत्पत्तिकर्त्रे च स्थितिसंहारहेतवे।
भवपाशविमुक्ताय दत्तात्रेय नमोऽस्तु ते॥ १

जराजन्मविनाशाय देहशुद्धिकराय च।
दिगम्बर दयामूर्ते दत्तात्रेय नमोऽस्तु ते॥ २

कर्पूरकान्तिदेहाय ब्रह्ममूर्तिधराय च।
वेदशास्त्रपरिज्ञाय दत्तात्रेय नमोऽस्तु ते ।। ३

ह्रस्वदीर्घकृशस्थूलनामगोत्रविवर्जित।
पञ्चभूतैकदीप्ताय दत्तात्रेय नमोऽस्तु ते ।। ४

यज्ञभोक्त्रे च यज्ञाय यज्ञरूपधराय च।
यज्ञप्रियाय सिद्धाय दत्तात्रेय नमोऽस्तु ते ।। ५

आदौ ब्रह्मा मध्ये विष्णुरन्ते देवः सदाशिवः।
मूर्तित्रयस्वरूपाय दत्तात्रेय नमोऽस्तु ते ।। ६

भोगालयाय भोगाय योगयोग्याय धारिणे।
जितेन्द्रियजितज्ञाय दत्तात्रेय नमोऽस्तु ते ।। ७

दिगम्बराय दिव्याय दिव्यरूपधराय च।
सदोदितपरब्रह्म दत्तात्रेय नमोऽस्तु ते ।। ८

जंबूद्वीपे महाक्षेत्रे मातापुरनिवासिने।
जयमान सतां देव दत्तात्रेय नमोऽस्तु ते ।। ९

भिक्षाटनं गृहे ग्रामे पात्रं हेममयं करे।
नानास्वादमयी भिक्षा दत्तात्रेय नमोऽस्तु ते ।। १०

ब्रह्मज्ञानमयी मुद्रा वस्त्रे चाकाशभूतले।
प्रज्ञानघनबोधाय दत्तात्रेय नमोऽस्तु ते ।। ११

अवधूत सदानन्द परब्रह्मस्वरूपिणे।
विदेहदेहरूपाय दत्तात्रेय नमोऽस्तु ते ।। १२

सत्यरूप सदाचार सत्यधर्मपरायण।
सत्याश्रय परोक्षाय दत्तात्रेय नमोऽस्तु ते ।। १३

शूलहस्त गदापाणे वनमालासुकन्धर।
यज्ञसूत्रधर ब्रह्मन् दत्तात्रेय नमोऽस्तु ते ।। १४

क्षराक्षरस्वरूपाय परात्परतराय च।
दत्त मुक्तिपरस्तोत्र दत्तात्रेय नमोऽस्तु ते ।। १५

दत्तविद्याढ्य लक्ष्मीश दत्तस्वात्मस्वरूपिणे।
गुणनिर्गुणरूपाय दत्तात्रेय नमोऽस्तु ते ।। १६

शत्रुनाशकरं स्तोत्रं ज्ञानविज्ञानदायकम्।
सर्वपापं शमं याति दत्तात्रेय नमोऽस्तु ते ।। १७

इदं स्तोत्रं महद्दिव्यं दत्तप्रत्यक्षकारकम्।
दत्तात्रेयप्रसादाच्च नारदेन प्रकीर्तितम् ।। १८

*इति श्री नारदपुराणे नारदविरचितं*
*दत्तात्रेय स्तोत्रं सम्पूर्णम्*



## २४. दत्तस्तवराजः

महादेव महादेव देवदेव महेश्वर।
दत्तात्रेयस्तवं दिव्यं श्रोतुमिच्छाम्यहं प्रभो ।। १

तदस्य वद माहात्म्यं देवदेव दयानिधे।
दत्तात्परतरं नास्ति पुरा व्यासेन कीर्तितम् ।। २

जगद्गुरुर्जगन्नाथो गीयते नारदादिभिः।
तत्सर्वं ब्रूहि मे देव करुणाकर शङ्कर ।। ३

महादेव उवाच-

शृणु व्यासात्मजात त्वं गुह्यात् गुह्यतरं महत्।
यस्य स्मरणमात्रेण मुच्यते सर्वबन्धनात् ।। ४

दत्तं सनातनं ब्रह्म निर्विकारं निरञ्जनम्।
आदिदेवं निराकारं व्यक्तं गुणविवर्जितम्॥ ५

नामरूपक्रियातीतं निःसङ्गं देववन्दितम्।
नारायणं शिवं शुद्धं दृश्यदर्शनवर्जितम्॥ ६

परेशं पार्वतीकान्तं रमाधीशं दिगम्बरम्।
निर्मलो नित्यतृप्तात्मा नित्यानन्दो महेश्वरः॥ ७

ब्रह्मा विष्णुः शिवः साक्षाद् गोविन्दो गतिदायकः।
पीताम्बरधरो देवः माधवः सुरसेवितः॥ ८

मृत्युञ्जयो महारुद्रः कार्तवीर्यवरप्रदः।
ओमित्येकाक्षरं बीजं क्षराक्षरपदं हरिः॥ ९

गया काशी कुरुक्षेत्रं प्रयागं बदरिकाश्रमः।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ १०

गोमती जाह्नवी भीमा गण्डकी च सरस्वती।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ ११

सरयूस्तुङ्गभद्रा च यमुना पयवाहिनी।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ १२

ताम्रपर्णी प्रणीता च गौतमी तापनाशिनी।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ १३

नर्मदा सिन्धु कावेरी कृष्णवेणी तथैव च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ १४

अवन्ती द्वारका माया मल्लिनाथस्य दर्शनम्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्॥ १५

द्वादश ज्योतिर्लिङ्गं च वाराहे पुष्करे तथा।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। १६

ज्वालामुखी हिङ्गुला च सप्तशृङ्गस्तथैव च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। १७

अयोध्या मथुरा काञ्ची रेणुका सेतुबन्धनम्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। १८

अहोबिलं त्रिपथगां गङ्गा सागरमेव च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। १९

करवीरमहास्थानं रङ्गनाथं तथैव च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २०

एकादशीव्रतं चैव अष्टाङ्गैर्योगसाधनम्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २१

शाकम्भरी च मूकाम्बा कार्तिकस्वामिदर्शनम्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २२

व्रतं निष्ठा तपो दानं सामगानं तथैव च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २३

मुक्तिक्षेत्रं च कामाक्षी तुलजा सिद्धिदेवता।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २४

अन्नहोमादिकं दानं मेदिन्यश्वगजान् वृषान्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २५

माघकार्तिकयोः स्नानं सन्यासं ब्रह्मचर्यकम्।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम्।। २६

अश्वमेधसहस्राणि मातापितृप्रपोषणम् ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। २७

अमितं पोषणं पुण्यं उपकारस्तथैव च ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। २८

जगन्नाथं च गोकर्णं पाण्डुरङ्गं तथैव च ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। २९

सर्वदेवनमस्कारः सर्वे यज्ञाः प्रकीर्तिताः ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३०

शास्त्रषट्कं पुराणानि अष्टौ व्याकरणानि च ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३१

सावित्री प्रणवं जप्त्वा चतुर्वेदांश्च पारगः ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३२

कन्यादानानि पुण्यानि वानप्रस्थस्य पोषणम् ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३३

वापी कूपतटाकानि काननारोपणानि च।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३४

अश्वत्थतुलसी धात्री सेवेत यो नरस्सदा ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३५

शिवं विष्णुं गणेशं च शक्तिं सूर्यं च पूजनम् ।
एतत्सर्वं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३६

गोहत्यादिसहस्राणि ब्रह्महत्यास्तथैव च ।
प्रायश्चित्तं कृतं तेन दत्त इत्यक्षरद्वयम् ।। ३७

मुच्यते सर्वपापेभ्यो दत्त इत्यक्षरद्वयम्। ३८

स्वर्णस्तेयं सुरापानं मातागमनकिल्बिषम्।
प्रायश्चित्तं कृतं तेन दत्त इत्यक्षरद्वयम्।। ३९

स्त्रीहत्यादिकं पापं बालहत्यास्तथैव च। ४०

प्रायश्चित्तं कृतं तेन सर्वपापप्राणाशनम्।
ब्रह्मत्वं लभ्यते ज्ञानं दत्त इत्यक्षरद्वयम्।। ४१

कलिदोष विनाशार्थं जपेदेकाग्रमानसः।
श्री गुरुं परमानन्दं दत्त इत्यक्षरद्वयम्।। ४२

दत्त दत्त त्विदं वाक्यं तारकं सर्वदेहिनाम्।
श्रद्धायुक्तो जपेन्नित्यं दत्त इत्यक्षरद्वयम्।। ४३

केशवं माधवं विष्णुं गोविन्दं गोपतिं हरिम्।
गुरूणां पठ्यते नित्यं तत्सर्वं च शुभावहम्।। ४४

निरञ्जनं निराकारं देवदेवं जनार्दनम्।
मायामुक्तं जपेन्नित्यं पावनं सर्वदेहिनाम्।। ४५

आदिनाथं सुरश्रेष्ठं कृष्णं श्यामं जगद्गुरुम्।
सिद्धराजं गुणातीतं रामं राजीवलोचनम्।। ४६

नारायणं परं ब्रह्म लक्ष्मीकान्तं परात्परम्।
अप्रमेयं सुरानन्दं नमो दत्तदिगम्बरम्।। ४७

योगिराजोऽत्रिवरदः सुराध्यक्षो गुणान्तकः।
अनसूयात्मजो देवो देवो गतिप्रदायकः।। ४८

गोपनीयं प्रयत्नेन यदि देवमुनीश्वरैः।
समस्तऋषिभिः सर्वैः भक्त्या स्तुत्वा महात्मभिः।। ४९

नारदेन सुरेन्द्रेण सनकाद्यैर्महात्मभिः ।
गौतमेन च गार्ग्येण व्यासेन कपिलेन च ।।५०

वामदेवेन दक्षेण अत्रिभार्गवमुद्गलैः ।
वसिष्ठप्रमुखैः सर्वैः गीयते सर्वदादरात् ।। ५१

विनायकेन रुद्रेण महासेनेन वै सदा ।
मार्कण्डेयेन धौम्येन कीर्तितं स्तवमुत्तमम् ।। ५२

मरीच्यादिमुनीन्द्रैश्च शुककर्दमसत्तमैः ।
अङ्गिराकृतपौलस्त्यभृगुकश्यपजैमिनी ।। ५३

गुरुस्तवमधीयानो विजयी सर्वदा भवेत् ।
गुरोः सायुज्यमाप्नोति गुरोर्नाम पठेद्बुधः ।। ५४

गुरोः परतरं नास्ति सत्यं सत्यं न संशयः ।
गुरोः पादोदकं पीत्वा गुरुनाम सदा जपेत् ।। ५५

तेऽपि संन्यासिनो ज्ञेयाः इतरे वेषधारिणः ।
गङ्गाद्याः सरितः सर्वे गुरोः पादाम्बुजे सदा ।। ५६

गुरुस्तवं न जानाति गुरुनाममुखेन हि ।
पशुतुल्यं विजानीयात् सत्यं सत्यं महामुने ।। ५७

इति स्तोत्रं महादिव्यं स्तवराजं मनोहरम् ।
पठनाच्छ्रवणाद्वापि सर्वान् कामानवाप्नुयात् ।। ५८

*इति श्रीमन्महादेवशुकसंवादे दत्तस्तवराजः सम्पूर्णः*

# २५. दत्तस्तोत्रम्

(श्री भृगुविरचितम्)

बालार्कप्रभमिन्द्रनीलजटिलं भस्माङ्गरागोज्वलं
शान्तं नादविलीनचित्तपवनं शार्दूलचर्माम्बरम् ।
ब्रह्मज्ञैः सनकादिभिः परिवृतं सिद्धैः समाराधितं
आत्रेयं समुपास्महे हृदि मुदा ध्येयं सदा योगिभिः ।। १

दिगम्बरं भस्मविलेपिताङ्गं चक्रं त्रिशूलं डमरुं गदां च ।
पद्मासनस्थं शशिसूर्यनेत्रं दत्तात्रेयं ध्येयमभीष्टसिद्ध्यै ।। २

ओं नमः श्रीगुरुं दत्तं दत्तदेवं जगद्गुरुम् ।
निष्कलं निर्गुणं वन्दे दत्तात्रेयं नमाम्यहम् ।। ३

ब्रह्म लोकेश भूतेश शङ्खचक्रगदाधरम् ।
पाणिपात्रधरं देवं दत्तात्रेयं नमाम्यहम् ।। ४

सुरेशवन्दितं देवं त्रैलोक्य लोकवन्दितम् ।
हरिहरात्मकं देवं दत्तात्रेयं नमाम्यहम् ।। ५

निर्मलं नीलवर्णं च सुन्दरं श्यामशोभितम् ।
सुलोचनं विशालाक्षं दत्तात्रेयं नमाम्यहम् ।। ६

त्रिशूलं डमरुं मालां जटामुकुटमण्डितम् ।
मण्डितं कुण्डलं कर्णे दत्तात्रेयं नमाम्यहम् ।। ७

विभूतिभूषितदेहं हारकेयूरशोभितम् ।
अनन्तप्रणवाकारं श्रीदत्तात्रेयं नमाम्यहम् ।। ८

प्रसन्नवदनं देवं भुक्तिमुक्तिप्रदायकम् ।
जनार्दनं जगत्त्राणं दत्तात्रेयं नमाम्यहम् ।। ९

राजराजं मिताचारं कार्तवीर्यवरप्रदम् ।
सुभद्रं भद्रकल्याणं दत्तात्रेयं नमाम्यहम् ।। १०

अनसूयाप्रियकरं अत्रिपुत्रं सुरेश्वरम् ।
विख्यातयोगिनां मोक्षं दत्तात्रेयं नमाम्यहम् ।। ११

दिगम्बरतनुं श्रेष्ठं ब्रह्मचर्यव्रते स्थितम् ।
हंसं हंसात्मकं नित्यं दत्तात्रेयं नमाम्यहम् ।। १२

कदा योगी कदा भोगी बाललीलाविनोदकः ।
दशनैः रत्नसंकाशैः दत्तात्रेयं नमाम्यहम् ।। १३

भूतबाधा भवत्रासः ग्रहपीडा तथैव च ।
दरिद्रव्यसनध्वंसी दत्तात्रेयं नमाम्यहम् ।। १४

चतुर्दश्यां बुधे वारे जन्ममार्गशिरे शुभे ।
तारकं विपुलं वन्दे दत्तात्रेयं नमाम्यहम् ।। १५

रक्तोत्पलदलपादं सर्वतीर्थं समुद्भवम् ।
वन्दितं योगिभिः सर्वैः दत्तात्रेयं नमाम्यहम् ।। १६

ज्ञानदाता प्रभुः साक्षात् गतिर्मोक्षप्रदायकः ।
आत्मभूरीश्वरः कृष्णः दत्तात्रेयं नमाम्यहम् ।। १७

भृगुविरचितमिदं दत्तात्रेय पारायणान्वितम् ।
साक्षाद्यद्भवत्स्वयं ब्रह्मा दत्तात्रेयं नमाम्यहम् ।। १८

प्राणिनां सर्वजन्तूनां कर्मपाशप्रभञ्जनम् ।
दत्तात्रेयगुरुस्तोत्रं सर्वान् कामानवाप्नुयात् ।। १९

अपुत्रो लभते पुत्रं धनधान्यसमन्वितः ।
राजमान्यो भवेल्लक्ष्मीं अप्राप्यं प्राप्नुयात् नरः ।। २०

त्रिसन्ध्यं जपमानस्तु दत्तात्रेयस्तुतिं सदा ।
तस्य रोगभयं नास्ति दीर्घायुर्विजयी भवेत् ।। २१

कूष्माण्डडाकिनीपक्षपिशाचब्रह्मराक्षसाः ।
स्तोत्रस्य श्रुतमात्रेण गच्छन्त्यत्र न संशयः ।। २२

एतद्विंशतिश्लोकानां आवृत्तिं कुरु विंशतिम् ।
तस्यावृत्तिसहस्रेण दर्शनं नात्र संशयः ।। २३

*इति श्रीभृगुविरचितं दत्तस्तोत्रं सम्पूर्णम् ।।*



## २६. श्री दत्त शरणाष्टकम् ॥

दत्तात्रेय भव शरणम्। दत्तनाथ भव शरणम्।
त्रिगुणात्मक त्रिगुणातीत। त्रिभुवनपालक भव शरणम्॥ १
शाश्वतमूर्ते भव शरणम्। श्यामसुंदर भव शरणम्।
शेषाभरण शेषभूषण। शेषशायिन् गुरो भव शरणम्॥ २
षड्भुजमूर्ते भव शरणम्। षड्यतिवर भव शरणम्।
दंडकमंडलु गदापद्मकर। शंखचक्रधर भव शरणम्॥ ३
करुणानिधे भव शरणम्। करुणासागर भव शरणम्।
कृष्णासंगमिंस्तरुवरवासिन्। भक्तवत्सल भव शरणम्॥ ४
श्रीगुरुनाथ भव शरणम्। सद्गुरुनाथ भव शरणम्।
श्रीपादश्रीवल्लभ गुरुवर। नृसिंहसरस्वति भव शरणम्॥ ५

कृपामूर्ते भव शरणम्। कृपासागर भव शरणम्।
कृपाकटाक्ष कृपावलोकन। कृपानिधे गुरो भव शरणम्॥ ६

कालांतक भव शरणम्। कालनाशक भव शरणम्।
पूर्णानिन्द पूर्णपरेश। पुराणपुरुष भव शरणम्॥ ७

हे जगदीश भव शरणम्। जगन्नाथ भव शरणम्।
जगत्पालक जगदधीश। जगदुद्धार भव शरणम्॥ ८

अखिलांतर भव शरणम्। अखिलैश्वर्य भव शरणम्।
भक्तप्रिय वज्रपंजर। प्रसन्नवक्त्र भव शरणम्॥ ९

दिगंबर भव शरणम्। दीनदयाघन भव शरणम्।
दीननाथ दीनदयाळ। दीनोद्धार भव शरणम्॥ १०

तपोमूर्ते भव शरणम्। तेजोराशे भव शरणम्।
ब्रह्मानंद ब्रह्मसनातन। ब्रह्ममोहन भव शरणम्॥ ११

विश्वात्मक भव शरणम्। विश्वरक्षक भव शरणम्।
विश्वंभर विश्वजीवन। विश्वपरात्पर भव शरणम्।। १२

विघ्नांतक भव शरणम्। विघ्ननाशक भव शरणम्।
प्रणवातीत प्रेमवर्धन। प्रकाशमूर्ते भव शरणम्।। १३

निजानंद भव शरणम्। निजपददायक भव शरणम्।
नित्यनिरंजन निराकार। निराधार भव शरणम्।। १४

चिद्धनमूर्ते भव शरणम्। चिदाकार भव शरणम्।
चिदात्मरूप चिदानंद। चित्सुखकंद भव शरणम्।। १५

अनादिमूर्ते भव शरणम्। अखिलावतार भव शरणम्।
अनंतकोटि ब्रह्माण्डनायक। अघटितघटन भव शरणम्।। १६

भक्तोद्धार भव शरणम्। भक्तरक्षक भव शरणम्।
भक्तानुग्रह गुरुभक्तप्रिय। पतितोद्धार भव शरणम्।। १७

दत्तात्रेय भव शरणम्।।

## २७. श्रीदत्तात्रेयस्तवः

दत्तात्रेयं महात्मानं वरदं भक्तवत्सलम्।
प्रपन्नार्तिहरं वन्दे स्मर्तृगामी स नोऽवतु।। १

दीनबन्धुं कृपासिन्धुं सर्वकारणकारणम्।
सर्वरक्षाकरं वन्दे स्मर्तृगामी स नोऽवतु।। २

शरणागतदीनार्तपरित्राणपरायणम्।
नारायणं विभुं वन्दे स्मर्तृगामी स नोऽवतु।। ३

सर्वानर्थहरं देवं सर्वमङ्गलमङ्गलम्।
सर्वक्लेशहरं वन्दे स्मर्तृगामी स नोऽवतु।। ४

ब्रह्मण्यं धर्मतत्त्वज्ञं भक्तकीर्तिविवर्धनम्।
भक्ताभीष्टप्रदं वन्दे स्मर्तृगामी स नोऽवतु ॥ ५

सर्वरोगप्रशमनं सर्वपीडानिवारणम्।
विपदुद्धरणं वन्दे स्मर्तृगामी स नोऽवतु ॥ ६

जन्मसंसारबन्धघ्नं स्वरूपानन्ददायकम्।
निः श्रेयसपदं वन्दे स्मर्तृगामी स नोऽवतु ॥ ७

जयलाभयशस्कामदातुर्दत्तस्य यः स्तवम्।
भोगमोक्षप्रदस्येमं प्रपठेत्स कृती भवेत् ॥ ८

प.प. वासुदेवानन्दसरस्वतीकृतं

## २८. श्रीदत्तस्तोत्रम्

अनसूयात्रिसंभूत दत्तात्रेय महामते।
सर्वदेवाधिदेव त्वं मम चित्तं स्थिरीकुरु ॥ १

शरणागतदीनार्ततारकाखिलकारक।
सर्वपालक देव त्वं मम चित्तं स्थिरीकुरु ॥ २

सर्वमङ्गलमाङ्गल्य सर्वाधिव्याधिभेषज।
सर्वसङ्कटहारिंस्त्वं मम चित्तं स्थिरीकुरु ॥ ३

स्मर्तृगामी स्वभक्तानां कामदो रिपुनाशनः।
भुक्तिमुक्तिप्रदः स त्वं मम चित्तं स्थिरीकुरु ॥ ४

सर्वपापक्षयकरस्तापदैन्यनिवारणः।
योऽभीष्टदः प्रभुः स त्वं मम चित्तं स्थिरीकुरु ॥ ५

य एतत्प्रयतः श्लोकपञ्चकं प्रपठेत्सुधीः।
स्थिरचित्तः स भगवत्कृपापात्रं भविष्यति ॥ ६

* * *

# २९. दत्तात्रेय ध्यानम्

१. दत्तात्रेयं शिवं शान्तं सच्चिदानन्दमद्वयम्।
आत्मरूपं परं दिव्यमवधूतमुपास्महे॥ १

२. दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं प्रभुम्।
आत्ममायारतं देवं अवधूतं दिगम्बरम्॥ २

भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम्।
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम्॥ ३

ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम्।
भक्तानुकम्पनं सर्वसाक्षिणं सिद्धसेवितम्॥ ४

जटाधरं पाण्डुरङ्गं शूलहस्तं कृपानिधिम्।
सर्वरोगहरं देवं दत्तात्रेयमहं भजे॥ ५

३. माला कमण्डलुरधः करपद्मयुग्मे
मध्यस्थपाणियुगले डमरुत्रिशूले।
यन्यस्त ऊर्ध्वकरयोः शुभशङ्खचक्रे
वन्दे तमत्रिवरदं भुजषट्क युक्तम्॥ ६

* * *

# ३०. नक्षत्रमालिकास्तोत्रम्

गोदावर्या महानद्या उत्तरे सिंहपर्वते।
सुपुण्ये माहुरपुरे सर्वतीर्थसमन्विते॥ १

जज्ञेऽत्रेरनसूयायां प्रदोषे बुधवासरे।
मार्गशीर्ष्यां महायोगी दत्तात्रेयो दिगम्बरः॥ २

मालां कुण्डीं च डमरुं शूलं शङ्खं सुदर्शनम् ।
दधानः षड्भुजैस्त्र्यात्मा योगमार्गप्रवर्तकः ।। ३

भस्मोद्धूलितसर्वाङ्गो जटाजूटविराजितः ।
रुद्राक्षभूषिततनुः शाम्भवीमुद्रया युतः ।। ४

भक्तानुग्रहकृन्नित्यं पापतापार्तिभञ्जनः ।
बालोन्मत्तपिशाचाभः स्मर्तृगामी दयानिधिः ।। ५

यस्यास्ति माहुरे निद्रा निवासः सिंहपर्वते ।
प्रातः स्नानं च गङ्गायां ध्यानं गन्धर्वपत्तने ।। ६

कुरुक्षेत्रे चाचमनं धूतपापेश्वरे तथा ।
विभूतिधारणं प्रातःसन्ध्या च करहाटके ।। ७

कोलापुरेऽस्य भिक्षा च पाञ्चालेऽपि च भोजनम् ।
दिनगो विठ्ठलपुरे तुङ्गापानं दिने दिने ।। ८

पुराणश्रवणं यस्य नरनारायणाश्रमे ।
विश्रामो सरदे सायंसन्ध्या पश्चिमसागरे ।। ९

कार्तवीर्यार्जुनायादाद्योगर्धिमुभयीं प्रभुः ।
स्वात्मतत्वं च यदवे बहुगुर्वाप्तिमुत्तमम् ।। १०

आन्वीक्षिकीमलर्काय प्रह्लादाय तगीयते ।
आयूराजाय च वरान् साध्येभ्यो मोक्षसाधनम् ।। ११

मन्त्रांश्च विष्णुदत्ताय, सोमकान्ताय कर्म च ।
स एवाविरभूद्भूयः पूर्वार्णवसमीपतः ।। १२

भाद्रे मासि सिते पक्षे चतुर्थ्यां राजविप्रतः ।
सुमत्यां प्राक्सिन्धुतीरे रम्ये पीठापुरे वरे ।। १३

य आचारव्यवहृतिप्रायश्चित्तोपदेशकृत् ।
निजाग्रजावन्धपङ्गू विलोक्य प्रव्रजन्सुधीः ।। १४

मातापित्रोर्मुदे दृष्टिं गतिं ताभ्या मुपानयत्।
महीं प्रदक्षिणीकृत्य गोकर्णे त्र्यब्दमावसन्॥ १५

ततः कृष्णातटं प्राप्य मर्तुकामां सपुत्रकाम्।
निवर्त्य ब्राह्मणीं मन्दं प्रदोषं व्रतमादिशत्॥ १६

तत्पुत्रं विबुधं कृत्वा तस्या जन्मान्तरे प्रभुः।
पुत्रो भूत्वा नरहरिनामको देश उत्तरे॥ १७

काञ्चने नगरेऽप्यम्बामानयद्द्विपदो विभुः।
मासि पौषे सिते पक्षे द्वितीयायां शनेर्दिने॥ १८

जातमात्रोऽपि चोङ्कारं पपाठाथापि मूकवत्।
सप्ताब्दान् लीलया स्थित्वा नानाकौतुककृत्प्रभुः॥ १९

उपनीतोऽपठद्वेदान् सप्तमे वत्सरे स्वयम्।
आश्वास्य जननीं पुत्रद्वयदानेन बोधतः॥ २०

काशीं गत्वाऽष्टाङ्गयोगाभ्यासी कृष्णसरस्वतीम्।
कृत्वा गुरुं यतिर्भूत्वा वेदार्थान् संप्रकाश्य च॥ २१

लुप्तसंन्यासिधर्मं च तेने तुर्याश्रमं भुवि।
मेरुं प्रदक्षिणीकृत्य शिष्यान्कृत्वाऽपि भूरिशः॥ २२

पितृभ्यां दर्शनं दत्वा द्विजं शूलरुजार्दितम्।
कृत्वाऽनामयमाश्वास्य सायन्देवं महामतिम्॥ २३

अब्दं स्थित्वा वैद्यनाथक्षेत्रे कृष्णातटे ततः।
भिल्लवाट्यां चतुर्मासान् विभुर्गत्वा ततोऽग्रतः॥ २४

नृसिंहवाटिकाक्षेत्रे द्वादशाब्दान्वसन्त्सुधीः।
तत्र स्थित्वाऽपि गन्धर्वपुरमेत्यावसन्मठे॥ २५

जीवयित्वा मृतान्दुग्ध्वा वन्ध्यां च महिर्षी हरिः।
विश्वरूपं दर्शयित्वा यतये विश्वनाटकः॥ २६

बह्वीरमानुषीर्लीलाः कृत्वा गुप्तोऽपि तत्र च ।
य आस्ते भगवान्दत्तः सोऽस्मान् रक्षतु सर्वथा ।। २७

या सप्तविंशतिश्लोकैः कृता नक्षत्रमालिका ।
तद्भक्तेभ्योऽर्पिता भक्ताभिन्नश्रीदत्ततुष्टये ।। २८

* * *



श्री दत्तात्रेयः शरणम्

श्री गुरुभ्यो नमः । श्रीगणेशाय नमः । श्री सरस्वत्यै नमः ।

## परमहंसपरिव्राजक

## श्री वासुदेवानन्द सरस्वती(टेम्बे) विरचितं

# श्री गुरुचरितम्

## पूर्वपीठिका

பரமஹம்ஸ பரிவ்ராஜக
ஸ்ரீ வாஸுதேவானந்த ஸரஸ்வதீ (டேம்பே) அவர்கள்
இயற்றிய

# ஸ்ரீ குரு சரிதம்

### श्री गुरुस्तुतिः

श्री वैष्णवैशगाणेश-सौर्यशाक्त्यादिरूपधृक् ।
दत्तात्रेयोऽस्त्वजोऽनन्तः सदा मे हृदि सद्गुरुः ।। १

योऽजोऽनन्तोऽगुणोऽरूपो निस्तृडेकोऽक्रियोऽसृजत् ।
विश्वं धृत्वा षोडशांशं पुंरूपं योगमायया ।। २

दृश्यते ज्ञानदृष्ट्या यत्सहस्राक्षिशिरोऽङ्घ्रि सत् ।
रूपं यदङ्गसंस्थानैर्लोकव्यासः प्रकल्प्यते ।। ३

नानावतारबीजं यदनन्तं यत्कलामुखैः ।
देवतिर्यङ्मुखं सृष्टमस्वतन्त्रं जगत्पुरु ।। ४

गोभिः स्वार्थादानमीशसृष्टं नेशात्परं क्वचित् ।
देहेन्द्रियात्मजीवोत्थौ रागद्वेषावियन्तु भित् ।। ५

## முன்னுரை

*ஸ்ரீ விஷ்ணு, ஈசன், கணேசன், ஸுர்யன், சக்தி முதலிய வடிவை ஏற்ற தத்தாத்ரேயர், பிறப்பிறப்பல்லாதவர். அவர் நல்ல குருவாக என் உள்ளத்தில் எப்போதும் விளங்கட்டும். ஆதியந்த மற்றவராக குணமும் வடிவும் விருப்பும், செயலுமற்றுத் தனித்திருந்த அவர் யோக மாயையால் பதினைந்து தத்வங்களாலான உலகைப் படைத்தார். தான் பதினாறுவது தத்துவமான புருஷனாக ஆனார். எண்ணற்ற கண்களும், தலைகளும், கால்களும், ஏனையவையும் கொண்டு பல உலகங்கள் படைக்கப்பெற்றன. ப்ரஹ்மா முதலான தேவர்கள், ப்ராணிகள் கொண்டதும் தானியங்கியாகச் செயல்படாததுமான பெரும் உலகம் படைக்கப்பட்டது. ஈசன் தானே அவற்றின் உட்புகுந்து பல உருவங்களில் தோன்ற அவரே காரணமானார். உலகம் தான் பெற்ற இந்த்ரியங்களால் தனக்குத் தேவையானவற்றை விரும்பிப் பெற்றது. இந்த்ரியம் உடல் முதலானவற்றால் விளைந்த விருப்பும், வெறுப்பும் ஈசனிடமிருந்து ஜீவனைப் பிரித்தது. (5)*

**भूतेद् सोऽजोऽव्ययात्माऽपि संभवत्यात्ममायया ।**
**श्रेयोऽर्हसाधुगुप्त्यै स्वप्रकृतिस्थो युगे युगे ।। ६**

**श्रुत्वा तत्कर्म निर्द्वन्द्वो मुच्यते कर्मबन्धनात्।**
**न तथा कर्मसिद्धीप्सुर्द्वन्द्वात्मा भ्रान्तहृन्नरः ।। ७**

**गुणकर्मभिदा सृष्ट-चातुर्वर्ण्यस्य सोऽव्ययः ।**
**कर्ताप्यकर्ता यैर्ज्ञातो बध्यन्ते कर्मभिर्न ये ।। ८**

**भूभारभूततद्द्वेष्यघाताय विविधास्तनूः ।**
**धृत्वा कण्टकवन्मत्वा कृतकार्यो जहात्यसौ ।। ९**

*ஐம்பூதங்களைத் தன் விருப்பப்படி இயக்குகிற ஈசன் பிறப்பிறப்பற்றவனாயினும் நல்லோரைக் காக்க நெருக்கடி நேரும் போது மாயையின் உதவியால் தோன்றுகிறார். அவரது லீலைகளைப் பற்றிக் கேட்டறிந்தவன் பற்றற்றுக் கர்மப் பிணைப்பிலிருந்து*

விடுபடுகிறுன். தன் பணிக்கேற்ற பயனை எதிர்பார்ப்பதால் குழம்புபவன் விடுபடுவதில்லை. குணத்தாலும் செயலாலும் நான்கு வர்ண அமைப்பிற்கு மனிதர்களை உள்ளாக்கிக் கட்டுப்படுத்துகிற ஈசன் தான் அந்தப் பிணைகளால் கட்டுப்படுவதில்லை. பூமிக்குச் சுமையாகி ஈசனை எதிர்ப்பவரை அழிக்கப் பல அவதாரங்களை எடுத்து முள்ளை முள்ளால் அகற்றிப்பணி முடிந்ததும் மறைகிறுர். (9)

अस्यैवापूर्णकृत्याः स्युस्तन्वस्तासूत्तमोत्तमा ।
तनुरेकास्ति दत्ताख्या कृपासूः स्मर्तृगामिनी ।। १०

मुक्तैर्मुमुक्षुभिश्चान्यैर्ध्येया नान्येदृशी कलौ ।
कामदा यस्य कस्यापि स्मृतिगामिन्यनुक्षणम् ।। ११

विश्वं ततान योऽव्यक्तस्तद्यत्स्थं यो न तत्स्थितः ।
तद्यत्स्थं नैश्वराद्योगात्तद्भृत्तत्स्थो न वायुवत् ।। १२

मावशाद्योऽवशोऽभीक्ष्णं व्यसृजत्तदबंधनः ।
येनाध्यक्षेण मा सूते जगद्वेदामलं न यम् ।। १३

नृरूपेणावतीर्णं यत्तत्त्वाज्ञोऽसुरभावगः ।
न वेत्ति योगगम्यं यं सद्धर्मत्राणकारणम् ।। १४

सोऽन्वर्थाख्यानसूयात्रिपुत्रो जज्ञेऽज ईश्वरः ।
अचिन्त्याव्यक्तरूपोऽपि दत्तोऽर्च्यः स्मृतितोषणः ।। १५

परानन्दमयो विष्णुर्हृत्स्थोऽवेद्योऽप्यतीन्द्रियः ।
सदा सम्पूज्यते भक्तैर्भगवान् भक्तिभावनः ।। १६

ஒரு அவதாரமெடுத்தும் பணி முழுவதும் நிறைவுறுததால் மறுபடி அவதரிக்கிறுர். அந்த அவதாரங்களில் தத்தர், கருணைமிக்கவர், நினைப்பவரை உடன் அணுகுபவர். முக்தி பெற்றவரும் முக்தி பெற விரும்புபவரும் அவரை விரும்புவர். விரும்பியதைத் தருபவர் அவர் போல் வேறெவரும் இல்லை. தான்

வெளிப்படாமல் உலகை வெளிப்படுத்தி, தான் அதனைச் சாராமல் உலகைத் தாங்கி வாயு போன்று அதனுள்ளும் புறமும் உள்ளார். தான் சிக்கிக் கொள்ளாமல் தன்மேல் பார்வையில் இயங்குகிற மாயையால் உலகை இயக்குகிற ஈசனை உலகம் உணர்வதில்லை. அவரது உண்மை நிலை உணராதவர், அஸூரப் போக்குள்ளவராகி நல்லோரையும் உலகையும் காக்கிற அவரை உணரமாட்டார். அநஸூயை என்ற தாய் - அஸூயையே இல்லாதவள். அத்திரி என்ற தந்தை ஸ்தூல-ஸூக்ஷ்ம-காரண சரீரப் பற்றற்றவர். இவர்களின் புதல்வராக தத்தராக ஈசன் தோன்றினார். உருவகப்படுத்த இயலாத ஆற்றலும் வடிவும் கொண்ட அவர் தன்னை நினைப்பவரிடம் பிரியம் கொள்பவர். பேரானந்தவடிவினர். எங்கும் நீக்கமற நிரம்பியிருப்பவர். உள்ளத்தில் உள்ளவராயினும் உணரப் பெறாதவர். புலன்களுக்கு அப்பாற்பட்டவர். அவரிடம் பக்தி கொண்டவரால் வழிபடப் பெறுபவர். அவர்களது பக்தி உணர்வை மதிப்பவர். *(16).*

ईशे परा भावना

**अचिन्त्यस्य कुतो ध्यानं कूटस्थावाहनं कुतः ।**
**क्वासनं विश्वसंस्थस्य पाद्यं पूतात्मनः कुतः ।। १७**

**क्वानर्घोरुक्रमस्यार्घ्यं विष्णोराचमनं कुतः ।**
**निर्मलस्य कुतः स्नानं क्व निरावरणेऽम्बरम् ।। १८**

**स्वसूत्रस्य कुतः सूत्रं निर्मलस्य च लेपनम् ।**
**निस्तृषः सुमनोभिः किं किमक्लेद्यस्य धूपतः ।। १९**

**स्वप्रकाशस्य दीपैः किं किं भक्ष्याद्यैर्जगद्भृतः ।**
**किं देयं परितृप्तस्य विराजः क्व प्रदक्षिणाः ।। २०**

**किमनन्तस्य नतिभिः स्तौति को वागगोचरम् ।**
**अन्तर्बहिःप्रपूर्णस्य कथमुद्वासनं भवेत् ।। २१**

**सर्वतोऽपीत्यसंभाव्यो भाव्यते भक्तिभावनः ।**
**सेव्यसेवकभावेन भक्तैर्लीलानृविग्रहः ।। २२**

ஈசனைப் பற்றிய பேருணர்வு- நினைவிற்கு வராதவரைத் த்யானிப்பதும் மூத்தோருக்கும் மூத்தவரை தன்னை நோக்கி வரச் செய்வதும் இயலாது. எங்கும் உள்ளவருக்கு ஆஸனம் இட இயலாது. தூயவருக்குக் கால் அலம்ப நீரோ, உலகை அளந்தவருக்குக் கைகழுவ நீரோ, ஆசமனமோ, நீராட்டலோ, மறைக்க இயலாதவருக்கு ஆடையோ, தன் விருப்பப்படி இயங்குபவருக்கு உபவீதமோ, அப்பழுக்கற்றவருக்கு நறுமணப் பூச்சோ, வரட்சியுறுதவருக்குப் பூவோ, வியர்வை உறுதவருக்கு நறுமணப் புகையோ, தன்னொளியால் ஒளிர்பவருக்குத் தீபமோ உலகை உணவிட்டுக் காப்பவருக்கு விருந்துணவோ, நிறைவுமிக்கவருக்குத் தக்ஷிணை வழங்குதலோ, எங்கும் வியாபித்தவரை வலம் வருவதோ, எல்லைக்கப்பாலுள்ளவருக்கு நமஸ்காரமோ, வாக்குக்கெட்டாதவருக்குத் துதியோ, பயன்படுமா? உள்ளும் புறமும் நிறைந்தவரை விடை தந்து வழி அனுப்புவது எங்ஙனம்? இவ்வாறு எவ்வகையிலும் அணுகி வழிபட இயலாதவரை உபசரிப்பது எப்படி? அவர் உடையவர். நாம் பணியாள் என்று தான் பழகலாம். (22)

**मानसपूजा-**

**तवेशातीन्द्रियस्यापि पारम्पर्याश्रुतां तनुम् ।**
**प्रकल्प्याश्मादावर्चन्ति प्रार्चयेऽर्चां मनोमयीम् ।। २३**

**कलसुश्लोकगीतेन भगवन्दत्त जागृहि ।**
**भक्तवत्सल सामीप्यं कुरु मे मानसार्चने ।। २४**

**श्रीदत्तं खेचरीमुद्रामुद्रितं योगिसद्गुरुम् ।**
**सिद्धासनस्थं ध्यायेऽभी-वरप्रदकरं हरिम् ।। २५**

**दत्तात्रेयाह्वयाम्यत्र परिवारैः सहार्चने ।**
**श्रद्धाभक्त्येश्वरागच्छ ध्यातधाम्नाऽञ्जसा विभो ।। २६**

**सौवर्णं रत्नजडितं कल्पितं देवतामयम् ।**
**रम्यं सिंहासनं दत्त तत्रोपविश यंत्रिते ।। २७**

पाद्यं चंदनकर्पूर-सुरभि स्वादु वारि ते।
गृहाण कल्पितं तेन दत्ताङ्घ्री क्षालयामि ते ।। २८

गन्धाब्जतुलसीबिल्व-शमीपत्राक्षतान्वितम्।
साम्ब्वर्घ्यं स्वर्णपात्रेण कल्पितं दत्त गृह्यताम् ।। २९

सुस्वाद्वाचमनीयाम्बु हैमपात्रेण कल्पितम्।
तुभ्यमाचम्यतां दत्त मधुपर्कं गृहाण च ।। ३०

**உள்ளத்தால் வழிபடுதல் :** *ஈசனே ! நீர் புலப்படாதவர். காது வழி கேட்டபடி உமக்கு சிலை முதலியவற்றில் வடிவமைத்து வழிபடுவர். நான் உள்ளத்தில் வடிவமைத்து வழிபடுகிறேன். தத்த பகவானே ! இனிய பாட்டால் உம்மை எழுப்புகிறேன். விழித்தெழுவீர். அருகில் வந்து உள்ளத்து வழிபாட்டை ஏற்பீர். கேசரீ முத்ரையுடன் யோகத்தில் ஸித்தாஸனத்தில் அமர்ந்துள்ள ஸத்குரு ஸ்ரீ தத்தரை அபயமும் வரமுமளிக்கிற கைகளுள்ள ஹரியாக த்யானிக்கிறேன். ஆர்வமும் பக்தியும் கொண்டு வழிபடுவதற்கு உம்மை அழைக்கிறேன். தங்கத்தில் ரத்தினம் பதித்த தேவசக்தி கொண்ட இந்த சிம்மாஸனத்தில் அமர்வீர். சந்தனமும் கர்பூரமுமிட்டு மணக்கிற இந்த நீரால் உமது திருவடிகளை அலம்புகிறேன். தங்கக் கிண்ணத்தில் நீரிட்டு சந்தனம் தாமரை துளஸி பில்வம் வன்னியிலை, அக்ஷதை இட்ட இந்த நீரைக் கொண்டு கைகளை அலம்புவீர். தங்க பாத்திரத்திலிட்ட இனிய நீரால் ஆசமனம் செய்வீர் ! மதுபர்க்கம் ஏற்பீர். (30).*

पुष्पवासितसत्तैलमंगेष्वालिप्य दत्त भोः ।
पंचामृतैश्च गांगाद्भिः स्नानं ते कल्पयाम्यहम्।। ३१

भक्त्या दिगंबराचान्तजलेदं दत्त कल्पितम्।
काषायपरिधानं तद् गृहाणैणेयचर्म च ।। ३२

नानासूत्रधरैते ते ब्रह्मसूत्रे प्रकल्पिते।
गृहाण दैवतमये श्रीदत्त नवतन्तुके ।। ३३

भूतिमृत्स्नासुकस्तूरी-केशरान्वितचंदनम्।
रत्नाक्षताः कल्पितास्त्वामलङ्कुर्वेऽथ दत्त तैः ।। ३४

सच्छमीबिल्वतुलसी-पत्रैः सौगंधिकैः सुमैः ।
मनसा कल्पितैर्नानाविधैर्दत्तार्चयाम्यहम्।। ३५

लाक्षासिताभ्रश्रीवास-श्रीखण्डागरुगुग्गुलैः ।
युक्तोऽग्नियोजितो धूपो हृदा स्वीकुरु दत्त तम्।। ३६

स्वर्णपात्रे गोघृताक्त-वर्तिप्रज्वालितं हृदा ।
दीपं दत्त सकर्पूरं गृहाण स्वप्रकाशक ।। ३७

*பூமணம் பெற்ற எண்ணெய் பூசி பஞ்சாம்ருதம் கங்கை நீர் முதலியவற்ருல் நீராடுவீர். ஆசமனம் செய்வீர். திகம்பரரான நீர் காஷாயமும் மான் தோலும் தரிப்பீர். புதிய உபவீதம் தரித்து விபூதி, மண், கஸ்தூரி, குங்குமப்பூ, சந்தனம் இவற்றைப் பூசி ரத்தின அக்ஷதை ஏற்பீர். வன்னி இலை, பில்வம், துளசி, மணமுள்ள பூக்கள் என மனத்தால் கொணர்ந்தவற்ருல் அர்ச்சனை செய்கிறேன். கொம்பரக்கு, அப்பிரகம், மட்டிப் பால், சந்தனம், அகில் முதலியவற்றை நெருப்பிலிட்டுத் தூபமிது. தங்கத் தட்டில் கர்ப்பூரமும் நெய்யுமிட்ட தீபம் இது. தன்னொளியால் ஒளிர்கிற நீர் இதனை ஏற்பீர். (37)*

सषड्रसं षड्विधान्नं नैवेद्यं गव्यसंयुतम्।
कल्पितं हैमपात्रे ते भुंक्ष्व दत्तांब्वदः पिब ।। ३८

प्रक्षाल्यास्यं करौ चाद्भिर्दत्ताचम्य प्रगृह्यताम्।
तांबूलं दक्षिणां हैमीं कल्पितानि फलानि च ।। ३९

नीराज्य रत्नदीपैस्त्वां प्रणम्य मनसा च ते ।
परितस्त्वत्कथोद्घातैः कुर्वे दत्त प्रदक्षिणाः ।। ४०

मन्त्रवन्निहितो मूर्ध्नि दत्त ते कुसुमाञ्जलिः ।
कल्प्यन्ते मनसा गीत-वाद्यनृत्योपचारकाः ।। ४१

प्रेर्यमाणप्रेरकेण त्वया दत्तेरितेन ते।
कृतेयं मनसा पूजा श्रीमंस्तुष्टो भवानया ।। ४२

दत्त मानसतल्पे मे सुखनिद्रां रहः कुरु।
रम्ये व्यायतभक्त्याभतूलिकाढ्ये सुवीजिते ।। ४३

*அறுசுவை உண்டி பசுநெய் இட்டு தங்க வட்டிலில் வைத்துள்ளது. இதனை ஏற்று நீரைப் பருகுவீர். கையலம்பி ஆசமனம் செய்து தாம்பூலமும், தங்கத்தாலான தக்ஷிணையும் பழங்களும் ஏற்பீர். ரத்தின தீபங்களால் ஆரத்தி செய்து மனத்தால் வணங்குகிறேன். உம் கதை கூறி வலம் வந்து மந்த்ர புஷ்பமளித்து கீதமும் நடனமும் அளிக்கிறேன். வழிபடத் தூண்டியவரும் தூண்டப் பெறுபவரும் உபசாரப் பொருளும் நீரே. இந்த உள்ளத்து வழிபாட்டை ஏற்று உள்ளமாகிய கட்டிலில் படுத்துத் தனிமையில் இனிது உறங்குவீர் (43).*

## अपराध क्षमापणम्

रसज्ञा वशा तारकं स्वादु लभ्यं गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ।। ४४

वियोन्यन्तरे दैवदार्ढ्याद्विभो प्राग्, गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ।। ४५

मया मातृगर्भस्थितिप्राप्तकष्टाद् गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ।। ४६

मया जातमात्रेण संमोहितेन गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित्त ।। ४७

मया क्रीडनासक्तचितेन बाल्ये गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ।। ४८

मया यौवनेऽज्ञानतो भोगतोषाद् गृहीतं कदाचिन्न ते नाम दत्त।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ।। ४९

मया स्थाविरेऽनिघ्नसर्वेन्द्रियेण गृहीतं कदाचिन्न ते नाम दत्त ।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ॥ ५०

हृषीकेश मे वाङ्मनःकायजातं हरेऽज्ञानतो ज्ञानतो विश्वसाक्षिन्।
क्षमस्वापराधं क्षमस्वापराधं क्षमस्वापराधं प्रभो क्लिन्नचित ॥ ५१

स्मृतो ध्यात आवाहितोऽस्यर्चितो वा
न गीतः स्तुतो वन्दितो वा न जप्तः ।
क्षमस्वापराधं क्षमस्वापराधं
क्षमस्वापराधं प्रभो क्लिन्नचित ॥ ५२

दयाब्धिर्भवादृङ् न सागाश्च मादृग्
भवत्याप्तमन्तोर्भवान्मे शरण्यः ।
यथालम्बनं भूर्हि भूनिस्सृतांघ्रेरिति
प्रार्थितं दत्तशिष्येण सारम् ॥ ५३

*பிழை பொறுத்தருள வேண்டுதல்*- தத்த பகவானே ! என் நாக்கு என் வசத்திலுள்ளது. உமது திருநாமமும் மிகவும் இனியதும் எளிதில் கிடைப்பதும் கூட. நான் அதனை ஒரு போதும் சொல்வதில்லையே ! என் பிழை பொறுத்தருள்வீர். இளகிய மனமுள்ள நீர் பொறுத்தருள்வீர். பொறுத்தருள்வீர். இதற்கு முன் பிறவிகளிலும் விதியின் வலிமையால் நான் கூறவில்லை. இப்பிறவியிலும் தாயின் கருவகத்திலிருந்த போது இடநெருக்கடி அநுபவத்தால் கூறவில்லை. பிழை பொறுத்தருள்வீர். வெளிவந்த பின்னரும் அறிவு மயக்கத்தால் கூறவில்லை. பிழை பொறுத்தருள்வீர். சிறிது வளர்ந்த பின் விளையாட்டில் ஈடுபட்ட நான் நாமத்தைக் கூறவில்லை. பொறுத்தருள்வீர். வாலிப வயதில் போகப் பொருள் நாட்டத்தாலும் முதுமையில் இந்த்ரியங்களின் தளர்ச்சியாலும் ஒருபோதும் நாமம் கூறவில்லை. பொறுத்தருள்வீர். இளகிய மனமுள்ள நீர் பொறுத்தருள்வீர். உலகின் நிகழ்வதனைத்திற்கும் சாட்சியே ! ஹரியே! உள்ளத்தை இயக்குபவரே ! வாக்காலும் உடலாலும் உள்ளத்தாலும் செய்த பிழைகளைப் பொறுத்தருள்வீர். நான் உம்மை

हृद्युपास्यो धारणया वराभयकरो हरिः ।
प्रादेशमात्रः सुसिद्धः खेचरीमुद्रया युतः ॥ ३६

अङ्गुष्ठमात्रं पुरुषं दत्तात्रेयं दिगम्बरम् ।
ध्यायेत्सिद्धासनासीनं द्युनिशं कण्ठसंस्थितम् ॥ ३७

सहस्रदलपद्मस्थं सुसूक्ष्मं शान्तमुज्ज्वलम् ।
समाधिना द्वादशाहं तन्मयो भावयेत्परम् ॥ ३८

अन्तर्लीनसहृत्प्राणोऽपश्यन्नचलदृग्बहिः ।
मुद्रेयं शाम्भवी शून्याशून्यलक्ष्मपदप्रदा ॥ ३९

तद्वान् दृढासनो दक्षकर्णे रुद्धबिलो ध्वनिम् ।
त्रिग्रन्थिभेदं शृणुयात् सुसूक्ष्मं स समाधिभाक् ॥ ४०

यमेन दशधा नूनं दशधा नियमेन च ।
आसनाद्येन षट्केन योगोऽष्टाङ्गोऽयमुच्यते ॥ ४१

एतेनाष्टाङ्गयोगेन प्रबुद्धः स्वल्पसंविदा ।
शुभाशुभविनिर्मुक्तो देही ब्रह्ममयो भवेत् ॥ ४२

इदं रहस्यं परमं नाख्येयं यस्य कस्यचित् ॥ ४३

*इति योगाख्यं प्रथमं रहस्यम् ।*

* * *

## अथ बोधरहस्यम् ।

सन्तप्त धन्य संन्यासिन् गुरुभक्त गतागतात् ।
मुक्त्या आत्माप्तये तत्त्व-जडचैतन्यविद्भव ॥ १

स्वान्याङ्गं जडमन्या चिन्नामरूपात्मकं जडम् ।
रोमत्वङ्मांसनाड्यस्थि भुवोऽब्द्यो मूत्ररेतसी ॥ २

स्वेदोऽस्रलालेऽग्नेः क्षुत्तृण्णिद्रा तन्द्रा रतिर्गतिः ।
लौल्यं निरोधः प्रसाराकुञ्चने मरुतोऽथ खात् ।। ३

कामक्रुड्लोभमोहाभीस्-तदाढ्येयं जडा तनुः ।
वर्णाश्रमादिद्वन्द्वादि-संबन्धादिपरो भवान् ।। ४

यन्निर्विकल्पं स्फुरति तदन्तःकरणं मनः ।
तत्सङ्कल्पविकल्पाभ्यां तत्तु धीर्निश्चयात्मकम् ।। ५

अनुसन्धानकं चित्तमहङ्कारस्त्वहङ्कृतिः ।
व्यानाधार्याद्यं श्रुतेस्तु शब्दभुग्वक्ति वाक्सखम् ।। ६

समानाधारि त्वचान्यत् स्पर्श्याभ्यादातृ दातृ च ।
उदानाधारा धीर्नेत्राद् रूपभुक्सगमागमा ।। ७

जिह्वया प्राणवच्चित्तं रसभुग्रतिमूत्रकृत् ।
सापानाहङ्कृतिर्घ्राणाद् गन्धभुग्विड्विसर्गकृत् ।। ८

कर्मज्ञानेन्द्रियैः पुण्यपापयोः सुखदुःखयोः ।
भौतिके पञ्चके कर्तृभोक्तृत्वे द्वन्द्वतापि च ।। ९

तल्लिङ्गदेहतादात्म्यात् कर्तृत्वादि वृथार्जितम् ।
हेतुदेहपरस्वात्मज्ञानान्मुक्तिर्ध्रुवाऽचिरात् ।। १०

स्वदिदृक्ष्वरराज्ञानहेतुसाक्षी परो भवान् ।
निराकारस्वात्मबुद्धिमहाकारणसाक्ष्यपि ।। ११

स्थाणुरन्तर्बहिर्भास्वानात्मारामो निराकृतिः ।
चतुर्देहपरः साक्षी प्रत्यगीशोऽसि विद्ध्यदः ।। १२

अन्नासुहृद्ध्यहङ्कारमयतादात्म्यतो भ्रमः ।
स्थूलः पञ्चीकृतैर्भूतैः सूक्ष्मः कर्मेन्द्रियासुभिः ।। १३

धीन्द्रियैर्हेतुर्महांश्च तद्विदात्मन्यथोद्धृते।
अन्वयव्यतिरेकाभ्यां परं ब्रह्मैव शिष्यते॥ १४

भानं स्वप्नेऽस्योर्वभानेऽन्वयः प्राग्विस्मृतिः परः।
लिङ्गाभानेऽन्वयः स्वापभानं प्राग्विस्मृतिः परः॥ १५

तद्विदोऽसुमनोध्याख्या गुणावस्थाभिदः पृथक्।
सुप्त्यभानेऽन्वयो भानं समाधौ प्राग्वदन्यकः॥ १६

त्यक्तत्रिदेहसङ्गस्य निष्कल्पस्य सुषुप्तिवत्।
स्थितिः परात्परं वस्तु सच्चिच्छर्म निराकृति॥ १७

क्ष्माप्कालैर्बीजलीनद्रुर्यथेक्ष्यो जागृतेस्तथा।
सुप्त्यवित्स्थजगद्देहौ तत्परत्वाविदः पुनः॥ १८

देहान्ते ज्ञस्याहंतास्थविश्वाकारोऽनुजन्मदः।
अवस्था जागृतिः स्वप्नो निद्रा तुर्या च तुष्टये॥ १९

विश्वतेजःप्राज्ञप्रत्यगभिमानिन ईरिताः।
हृत्कण्ठहृन्मूर्धसंस्थाः स्थूलसूक्ष्ममुदुन्मुदः॥ २०

भोगा रजःसत्त्वतमःशुद्धसत्त्वगुणाः क्रमात्।
वाचोऽत्र वैखरी मध्या पश्यन्ती च परात्त्रिषु॥ २१

त्रिमात्रा ओङ्कृतेस्त्वर्धा तुर्ये ज्ञात्वैवमादितः।
स्थूलः सूक्ष्मे कारणे तत् तन्महाकारणे क्रमात्।
प्रविलाप्यानन्दमयः स्वस्थो भवति नान्यथा॥ २२

तस्माद्देहत्रये लीने धीलयः स समाधिकः।
तत्ते परात्परं रूपं निर्विकल्पमवेहि सत्॥ २३

घटादिवद्द्योर्जीवस्याविद्योपाधिस्तु तत्क्षये।
खस्थद्योवत्परात्मत्वं जीवत्वं लीयतेऽचिरात्॥ २४

ज्ञाते क्षराक्षराहन्तापरे तत्त्वे स तन्मयः ।
सृष्टेः प्राङ्निर्विकल्पैका चिद्ब्रह्मास्मीत्यभूत्त्विह ।। २५

स्फूर्तिः खे वायुवत्साद्या मायाद्यस्तज्ज्ञ ईश्वरः ।
तत्र विश्वोद्गमेहाभूत्सान्या मायाथ तत्र तु ।। २६

जगत्स्यामिति सङ्कल्पोऽभून्महत्तत्त्वनामकः ।
विद्याविद्ये उभे माये तज्ज्ञौ सर्वेशजीवकौ ।। २७

जीवोऽविद्याऽऽवृतः स्वाज्ञो महतोऽहङ्कृतिस्त्रिधा ।
क्रियाज्ञानद्रव्यशक्ति-रजःसत्त्वतमोगुणैः ।। २८

प्राणेन्द्रियान्तःकरणभूतान्यासन्क्रमात्ततः ।
ततो लोका विराट् तैश्चिदंशात् कार्यक्षमोऽभवत् ।। २९

लोकाङ्गस्य रदास्तारा माया हास्यं निशादिने ।
निमेषोन्मेषौ कटाक्षः सृष्टिः कुक्षिरपांपतिः ।। ३०

नाड्यो नद्यो द्रुमाः केशा वृष्टी रेतोऽस्थि पर्वतः ।
विराजः स्थूलदेहोऽयं चराचरजगन्मयः ।। ३१

दिग्वाय्वर्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
ज्ञानकर्मेन्द्रियाण्यन्तःकरणानि हरिः शशी ।। ३२

ब्रह्मनारायणेशाश्च सूक्ष्मदेहोऽथ कारणम् ।
अविद्याद्या महत्प्रत्यगीशो देहनिरासतः ।
तत्पदं व्यतिरेकात्त्वंपदं तत्त्वमसि ह्यतः ।। ३३

भूरप्स्वग्नौ ताः स वायौ स खे तत्प्रविलापयेत् ।
द्रव्ये तमसि तत्सत्त्वे रजः सत्त्वं तमस्यथ ।। ३४

अहङ्कृतौ तन्महति साऽविद्यायां लयो द्वयोः ।
साद्यायां सा ब्रह्मणीत्थं त्वंपदं व्यतिरेकतः ।। ३५

व्याख्यारूपैकसद्वस्तु सृष्टेः प्राक् चाधुनापि तत्।
त्वं श्रोत्रात्मेन्द्रियातीतमस्यैक्यमनुभूयताम्।। ३६

सृष्टेः प्राक् सच्चिदानन्द-रूपोऽद्याहङ्कृतेर्लयात्।
प्राग्वदूर्ध्वमपीदृक्त्वं या सृष्ट्यास्तित्वकल्पना।। ३७

गवाधाराहङ्कृतेः प्राक्स्थानाभावान्न साद्य चेत्।
तद्वत्कास्ति त्वमेकोऽतोऽद्वितीयो ब्रह्म चिन्मयः।। ३८

ब्रह्मबुद्ध्या द्वयाभावाद् देह्यहङ्कृतिसंक्षयात्।
शिष्यतेऽत्र निराकारः काख्यारूपात्मकं जगत्।। ३९

स्रग्भोगिवद्दृष्टमपि ज्ञानदीपान्न ते भ्रमः।
ज्ञानं त्यक्त्वा दृढाभ्यासी भ्रमेणापि न युज्यते।। ४०

स्रज्यह्यभावः प्रागूर्ध्वं तद्वद् ब्रह्मणि चास्य तु।
अभावाच्छून्यता मैहि तज्ज्ञ सच्चित्सुखात्मक।। ४१

भास्वान्नित्यः प्रबोधोऽयं वेदा भ्रान्तहितैषिणः।
साधकान्यद्य कार्याणि साध्याभावान्न कुर्वतः।। ४२

भगवद्वाक्यतोऽसक्तः कुरु वा तैर्न लिप्यसे।
मनो विनाऽपि ज्ञातासि ध्यानादेः किं प्रयोजनम्।। ४३

अदेहप्राणहृद्धर्मः प्रारब्धाशीः सुखं वस।
इदं रहस्यं बोधाख्यं तज्ज्ञो ब्रह्ममयो भवेत्।। ४४

इति बोधाख्यं द्वितीयं रहस्यम्।
समाप्तोऽयं ग्रन्थः। प्रीयतामनेन श्रीदत्तः।।

*इति श्रीमत्परमहंस परिव्राजकाचार्य*

*श्रीवासुदेवानन्दसरस्वती(टेम्बे) स्वामिविरचितं*

।। श्रीगुरुचरितं सम्पूर्णम्।।

* * *

